|| श्रीः ||

# || परीक्षामुखम् ||

---

## || मङ्गलाचरणम् ||

प्रमाणादर्थसंसिद्धिस्तदाभासाद्विपर्ययः ॥

इति वक्ष्ये तयोर्लक्ष्म सिद्धमल्पं लघीयसः ॥ १ ।

## || प्रथमः समुद्देशः ||

॥ द्वितीयः समुद्देशः ॥

॥ तृतीयः समुद्देशः ॥

१ न [उ]देष्यति इत्यपि पाठान्तरम् ॥ २ उपलम्भ इत्यपि पाठान्तरम् ॥

---

चतुर्थः समुद्देशः

---

पञ्चमः समुद्देशः



---

सूत्राणि. पृष्ठम्.

षष्ठः समुद्देशः

| सूत्राणि. | पृष्ठम्. |
|---|---|
| माणवकाः | १२१ |
| ५३ अंगुल्यग्रे हस्तियूथशतमास्त इति च | ,, |
| ५४ विसँवादात् | १२२ |
| ५५ प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्याभासम् | ,, |
| ५६ लौकायतिकस्य प्रत्यक्षतः परलोकादिनिषेधस्य परबुध्यादेश्चासिध्देरतद्विषयत्वात् | ,, |
| ५७ सौगतसांख्ययौगप्राभाकरजैमिनीयानां प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावैरेकैकाधिकैर्व्याप्तिवत् | ,, |
| ५८ अनुमनादेस्तद्विषयत्वे प्रमाणान्तरत्वम् | १२३ |
| ५९ तर्कस्येव व्याप्तिगोचरत्वे प्रमाणान्तरत्वम् । अप्रमाणस्याव्यवस्थापकत्वात् | ,, |
| ६० प्रतिभासभेदस्य च भेदकत्वात् | ,, |
| ६१ विषयाभासः सामान्यं विशेषो द्वयं वा स्वतंत्रम् | ,, |
| ६२ तथाप्रतिभासनात्कार्याकरणाच्च | १२४ |
| ६३ समर्थस्य करणे सर्वदोत्पत्तिरनपेक्षत्वात् | ,, |
| ६४ परापेक्षणे परिणामित्वमन्यथा तदभावात् | ,, |
| ६५ स्वयमसमर्थस्य अकारकत्वात्पूर्ववत् | ,, |

परीक्षामुखमादर्शं हेयोपादेयतत्त्वयोः ॥
संविदे मादृशो बालः परीक्षादक्षवद्व्यधाम् ॥ १ ॥

परीक्षामुखं समाप्तम्.

॥ श्रीः ॥

# ॥ परीक्षामुखम् ॥

## ॥ प्रमेयरत्नमालासहितम् ॥

॥ ॐ नमः सिद्धेभ्यः ॥ नतामरशिरोरत्न--प्रभाप्रोतनखत्विषे ॥ नमो जिनाय दुर्वारमारवीरमदच्छिदे ॥ १ ॥ अक-

---

१ मंगलं द्विविधं मुख्यममुख्यं चेति । मुख्यमंगलं जिनेन्द्रगुणस्तोत्रममुख्यमंगलं दध्यक्षतादि । तत्र मुख्यमंगलं द्वेधा निबद्धमनिबद्धं चेति । तत्र निबद्धं स्वेन कृतमनिबद्धं परकृतम् । तदपि द्विविधं परापरभेदात् । आप्तनमस्कारः परमंगलं गुरुपरम्परानमस्कारोऽपरमंगलम् ॥ २ जिनाय समस्तभगवदर्हत्परमेश्वरनिकुरम्बाय । नमो भूयात् । बहुविधविषमभवगहनभ्रमणकारणं दुष्कृतगणं जयतीति जिनः । त्रिकालगोचरपरमजिन इत्यर्थस्तस्मै ॥ ३ दुर्वारमारवीरमदच्छिदे — मां लक्ष्मीं रातीति मारः लक्ष्मीदायकः मोक्षमार्गस्य नेतेति यावत् । विशेषेण ईर्ते सकलपदार्थजातं प्रत्यक्षीकरोतीति वीरः सर्वज्ञः विश्वतत्त्वानां ज्ञातेति यावत् । मारश्चासौ वीरश्च मारवीरः । मदं मानकषायं छिनत्ति विदारयतीति मदच्छित् । उपलक्षणमिदं कर्मभूभृतां भेत्तेति यावत् । ( मारवीरश्चासौ मदच्छिच्च मारवीरमदच्छित् । दुर्वारो वादिभिरजय्योऽप्रतिहतशक्तिरिति यावत् । दुर्वारश्चासौ मारवीर-

लङ्कवचोऽम्भोधेरुद्दध्रे येन धीमता ॥ न्यायविद्यामृतं तस्मै नमो माणिक्यनन्दिने ॥ २ ॥ प्रभेन्दुवचनोदारचन्द्रिकाप्रसरे सति ॥ मादृशाः क्व नु गण्यन्ते ज्योतिरिङ्गणसन्निभाः ॥ ३ ॥ तथाऽपि तद्वचोऽपूर्वरचनारुचिरं सताम् ॥ चेतोहरं भृतं यद्वन्नद्यां नवघटे जलम् ॥ ४ ॥ वैनेयप्रियपुत्रस्य हीरपस्योपरोधतः ॥ शान्तिषेणार्थमारब्धा परीक्षामुखपञ्जिका ॥ ५ ॥ श्री-

---

मदाच्छिन्न दुर्वारमारवीरमदच्छित्तस्मै ॥ ) अथवा, मा प्रमेयपरिच्छेदकं केवलज्ञानमेव रविः अशेषप्रकाशकत्वात् । इरा मृदुमधुरगम्भीरनिरुपमहितदिव्यध्वनिः । मारविश्व इरा च मारवीरे । दुर्वारे कुहेतुदृष्टान्तैर्निवारयितुमशक्ये मारवीरे यस्य स तथोक्तः ॥ मदेनोपलक्षिता रागादयस्तेन मदाच्छिद्रागाद्यशेषदोषच्छिदिति निश्चीयते ॥ १ अकलंको भट्टाकलंकस्वामी अथवा न विद्यते अज्ञानादिकलंको यस्यासौ । अथवा अकलंकं च तद्वचश्च अकलंकवचः दिव्यध्वनिरित्यर्थः ॥ २ प्रशस्तविशालातिशायितज्ञानवता ॥ ३ प्रत्यक्षादिप्रमाणं न्यायः । अथवा, नयविक्षेपप्रमाणात्मको न्यायः ॥ ४ अहमिव दृश्यन्ते इति मादृशाः ॥ ५ खद्योतसदृशाः ॥

६ लक्षितस्य लक्षणमुपपद्यते न वेति विचारः परीक्षा । अथवा, स्वरूपं तदाभासः संख्या तदाभासः परीक्षा । अथवा, विरुद्धनानायुक्तिप्राबल्यदौर्बल्यावधारणाय प्रवर्तमानो विचारः परीक्षा ॥ कारिका स्वरूपवृत्तिस्तु, सूत्रं सूचनकं स्मृतम् । टीका निरन्तरं व्याख्या,

मन्नच्यार्यावारपारस्यामेयप्रमेयरत्नसारस्यावगाहनमव्युत्पन्नैः कर्तुं न पार्यत इति तदवगाहनाय पोतप्रायमिदं प्रकरणमाचार्यः प्राह ॥ तत्प्रकरणस्य च सम्बन्धादित्रयापरिज्ञाने सति प्रेक्षावतां प्रवृत्तिर्न स्यादिति तत्त्रयानुवादपुरःसरं वस्तुनिर्देशपरं प्रतिज्ञाश्लोकमाह——

**प्रमाणा[8]दर्थ[9]संसिद्धिस्तदाभासा[10]द्विपर्ययः ॥**

**इति वक्ष्ये तयोर्लक्ष्म सिद्धम[11]ल्पं लघीयसः[12] ॥ १ ॥**

---

पञ्जिका पदभञ्जिका ॥ १ ॥ १ पूर्वापरविवररहितत्वलक्षणा श्रीः ॥ नयः प्रमाणात्मिका युक्तिः । २ प्रमाणगोचरा जीवादिपदार्थाः । प्रमेयमेव रत्नानि प्रमेयरत्नानि ३ परीक्षामुखस्य । ४ विचारवताम् । ५ उक्तस्य सार्थं पुनर्वचनमनुवादः । ६ प्रमाणतदाभासलक्षणाभिधेयकथनपरम् । ७ वर्तमानस्याङ्गीकारः प्रतिज्ञा । ८ अत्र प्रमाणशब्दः कर्तृकरणभावसाधनः । तत्र प्रतिबन्धविगमविशेषवशात्स्वपरप्रमेयस्वरूपं प्रमीयते यथावज्जानातीति प्रमाणमात्मा । साधकतमत्वादिति विवक्षायां तु प्रमीयते येन तत्प्रमाणं प्रमितिमात्रं वा प्रमाणम् । प्रतिबन्धापाये प्रादुर्भूतज्ञानपर्यायस्य प्राधान्येनाश्रयणात्प्रदीपादेः प्रभाभारात्मकप्रकाशवत् । ९ अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु ॥ १ ॥ अर्यते गम्यते ज्ञायते यः सोऽर्थः । १० सम्यग्ज्ञानात्तत्र भवति इति तथापि तदिवाभासते प्रतिभातीति तदाभासः । ११ स्वरुचिविरचितत्वदूषणपरिहारार्थं सिद्धमित्युच्यते । १२ कनिष्ठान्मन्दमतीनिति यावत् ।

इत्यस्यार्थः—– अहं वक्ष्ये प्रतिपादयिष्ये । किं तल्लक्ष्म, लक्षणम् । किं विशिष्टं लक्ष्म ? सिध्दं, पूर्वाचार्यप्रसिद्धत्वात् । पुनरपि कथंभूतं ? अल्पमल्पग्रन्थवाच्यत्वात् । ग्रन्थतोऽल्पमर्थतस्तु महदित्यर्थः । कान् लघीयसो विनेयानुद्दिश्य । लाघवं मतिकृतमिह गृह्यते न परिमाणकृतं नाऽपि कालकृतं तस्य प्रतिपाद्यत्वव्यभिचारात् । कयोस्तल्लक्ष्म तयोः प्रमाणतदाभासयोः ॥ कुतः यतोऽर्थस्य परिच्छेद्यस्य संसिद्धिः संप्राप्तिर्ज्ञप्तिर्वा भवति ॥ कस्मात्प्रमाणात् । न केवलं प्रमाणादर्थसंसिद्धिर्भवति । विपर्ययो भवति । अर्थसंसिद्ध्यभावो भवति । कस्मात्तदाभासात् प्रमाणाभासात् ॥ इतिशब्दो हेत्वर्थे इति हेतोः ॥ अयमत्र समुदायार्थः । यतः कारणात्प्रमाणादर्थसंसिद्धिर्भवति । यस्माच्च तदाभासाद्विपर्ययो भवति । इति हेतोस्तयोः प्रमाणतदाभासयोर्लक्ष्म लक्षणमहं वक्ष्ये इति ॥ ननु सम्बन्धाभिधेयशक्यानुष्ठानेष्ट-

---

१ शिष्यत्व । २ प्रकृतस्यार्थस्यानुरोधेनोत्तरोत्तरस्य विधानं सम्बन्धः । सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ १ ॥ व्याख्याशुद्धिस्त्रिधा शास्त्रे स्थानमार्गप्रमेयतः । स्थानं त्रिधा द्विधा मार्गः प्रमेयं च त्रिधा विदुः ॥ २ ॥ श्लोकस्यास्य व्याख्यानम्–- तत्र पातनिकस्थानं द्विविधं सूत्रपातनिका ग्रन्थपात-

प्रयोजनवन्ति हि शास्त्राणि भवन्ति । तत्रास्य प्रकरणस्य यावदभिधेयं सम्बन्धो वा नाभिधीयते न तावदस्योपादेयत्वं भवितुमर्हति । एष वन्ध्यासुतो यातीत्यादिवाक्यवत् । दशदाडिमादिवाक्यवच्च ॥ तथा शक्यानुष्ठानेष्टप्रयोजनमपि शास्त्रादावश्यं वक्तव्यमेव । अशक्यानुष्ठानेष्टस्येष्टप्रयोजनस्य सर्वज्वरहरतक्षचूडारत्नालङ्कारोपदेशस्येव प्रेक्षावद्भिरनादरणीयत्वात् ॥ तथा शक्यानुष्ठानस्याप्यनिष्टप्रयोजनस्य विद्वद्भिरवधीरणान्मातृविवाहादिप्रदर्शकवाक्यवदिति ॥ सत्यं, प्रमाणतदाभासपदोपादानादभिधेयमभिहितमेव । प्रमाणतदाभासयोरनेन प्रकरणेनाभिधानात् ॥ सम्बन्धश्चार्थायातः प्रकरणतदभिधेययोर्वाच्यवाचकभावलक्षणः प्रतीयत एव ॥ तथा प्रयोजनं चोक्तलक्षणमादिश्लोकेनैव संलक्ष्यते, प्रयोजनं हि द्विधा भिद्यते । साक्षात्परम्परयेति । तत्र साक्षात्प्रयोजनं वक्ष्ये इत्यनेनाभिधीयते । प्रथमं शास्त्रव्युत्पत्तेरेव विनेयैरन्वेषणात् ॥ पारम्पर्येण तु प्रयोजनमर्थ-

---

निकेति । समर्थनस्थानं । विवरणस्थानमिति त्रिधा ॥ अन्वयमार्गः व्यतिरेकमार्ग इति मार्गो द्विधा । प्रकृतप्रमेयं, प्रासंगिकप्रमेयं, आनुषांगिकप्रमेयमिति त्रिधा ।

संसिद्धिरित्यनेनोच्यते शास्त्रव्युत्पत्त्यनन्तरभावित्वादर्थसंसिद्धेरिति ॥ ननु निःशेषविघ्नोपशमनायेष्टदेवतानमस्कारः शास्त्रकृता कथं न कृत इति न वाच्यम् । तस्य मनःकायाभ्यामपि सम्भवात् ॥ अथवा वाचनिकोऽपि नमस्कारोऽनेनैवादिवाक्येनाभिहितो वेदितव्यः । केषाञ्चिद्वाक्यानामुभयार्थप्रतिपादनपरत्वेनापि दृश्यमानत्वात् । यथा श्वेतो धावतीत्युक्ते श्वा इतो धावति श्वेतगुणयुक्तो धावति इत्यर्थद्वयप्रतीतिः ॥ तत्रादिवाक्यस्य नमस्कारपरताभिधीयते ॥ अर्थस्य हेयोपादेयलक्षणस्य संसिद्धिर्ज्ञप्तिर्भवति । कस्मात्प्रमाणात् । अनन्तचतुष्टयस्वरूपान्तरङ्गलक्षणा, समवसरणादिस्वभावा बहिरङ्गलक्षणा लक्ष्मीर्मा इत्युच्यते । अणनमाणः शब्दः मा च आणश्च माणौ प्रकृष्टौ माणौ यस्यासौ प्रमाणः । हरिहराद्यसम्भविविभूतियुक्तो दृष्टेष्टाविरुद्धवाक्च भगवानर्हन्नेवाभिधीयत इत्यसाधारणगुणोपदर्शनमेव भगवतः संस्तवनमभिधीयते । तस्मात्प्रमाणादवधिभूतादर्थसंसिद्धिर्भवति तदाभा-

---

१ अण्यते शब्द्यते येनासावाणः दिव्यध्वनिरित्यर्थः । प्रत्यक्षे परोक्षे अविरुद्धवाक् यस्य सः । अर्थद्वारेण साधितभगवतोऽर्हत्सकाशात्सर्वज्ञात्प्रथमकरणभूतात् फलमिति प्रतिपत्तिर्यथा प्रमाणाद्भिन्नमिति कापिलाः प्रमाणात्फलमभिन्नमिति सौगताः प्रमाणात्कथंचित्फलमभिन्नभिन्नमिति जैनाः ॥

साच्च हरिहरादेरर्थसंसिद्धिर्न भवति । इति हेतोः सर्वज्ञतदाभासयोर्लक्ष्म लक्षणमहं वक्ष्ये– सामग्रीविशेषेत्यादिना ॥ अथेदानीमुपक्षिप्तप्रमाणतत्त्वे स्वरूपसंख्याविषयफललक्षणासु चत-

---

१ स्वरूपसंख्याविषयफललक्षणाश्चतस्रो विप्रतिपत्तयः । सम्प्रति तासां मध्ये स्वरूपविप्रतिपत्तिर्यथा—स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणमित्यार्हताः । इन्द्रियप्रवृत्तिः प्रमाणमिति कापिलाः । प्रमातृव्यापारः प्रमाणमिति प्रभाकराः । अनधिगतार्थं प्रमाणमिति भाट्टाः । अविसंवादिविज्ञानं प्रमाणमिति सौगताः । प्रमाकरणं प्रमाणमिति यौगाः । कारकसाकल्यं प्रमाणमिति जयन्ताः

संख्याविप्रतिपत्तिर्यथा —प्रत्यक्षमेकं चार्वाकाः कारणात्सौगताः पुनः ॥ अनुमानं च तच्चैव सांख्याः शब्दं च ते अपि ॥ १ ॥ न्यायैकदेशिनोऽप्येवमुपमानं च केन च ॥ अर्थापत्त्या सहैतानि चत्वार्याहुः प्रभाकराः ॥ २ ॥ अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ॥ सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः ॥ ३ ॥ एतत्सर्वं युक्तं सम्भवति प्रत्यक्षपरोक्षभेदात् द्विविधं प्रमाणमिति जैना वदन्ति ॥

विषयविप्रतिपत्तिर्यथा—प्रमाणतत्वस्य सामान्यमेव विषयो न पुनर्विशेष इति कापिलाः पुरुषाद्वैतवादिनश्च । विशेषमेव विषयो न पुनः सामान्यमिति बौद्धाः । सामान्यं विशेषश्च द्वयमपि स्वतन्त्रभावेन विषय इति यौगाः । सामान्यं विशेषश्चाभेदेन विषय इति मीमांसकाः ॥

एषु विप्रतिपत्तिषु मध्ये स्वरूपविप्रतिपत्तिनिराकरणार्थमाह—

**स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणमिति ॥ १ ॥**

प्रकर्षेण संशयादिव्यवच्छेदेन मीयते परिच्छिद्यते वस्तुतत्त्वं येन तत्प्रमाणम् ॥ तस्य च ज्ञानमिति विशेषणमज्ञानरूपस्य सन्निकर्षादेर्नैयायिकादि–परिकल्पितस्य प्रमाणत्वव्यवच्छेदार्थमुक्तम् ॥ तथा ज्ञानस्यापि स्वसंवेदनेन्द्रियमनोयोगिप्रत्यक्षस्य निर्विकल्पकस्य प्रत्यक्षत्वेन प्रामाण्यं सौगतैः परिकल्पितं तन्निरासार्थं व्यवसायात्मकग्रहणम् ॥ तथा बहिरर्थापह्नोतॄणां विज्ञानाद्वैतवादिनां पुरुषाद्वैतवादिनां पश्यतोहराणां शून्यैकान्तवादिनां च विपर्यासव्युदासार्थमर्थग्रहणम् ॥ अस्य चापूर्वविशेषणं गृहीतग्राहिधारावाहिज्ञानस्य प्रमाणतापरिहारार्थमुक्तम् ॥ तथा परोक्षज्ञानवादिनां मीमांसकानामस्वसंवेदनज्ञानवादिनां सांख्यानां ज्ञानान्तरप्रत्यक्षज्ञानवादिनां यौगानां च

---

१ ज्ञायतेऽनेनेति ज्ञानं ज्ञप्तिर्वा ज्ञानम् ॥

२ षष्ठी वा नादरे इति षष्ठी ।

मतमपाकर्तुं स्वपदोपादानमित्यव्याप्त्यतिव्याप्त्यसम्भवदोषपरिहारात् सुव्यवस्थितमेव प्रमाणलक्षणम् ॥ अस्य च प्रमाणस्य यथोक्त-लक्षणत्वे साध्ये प्रमाणत्वादिति हेतुरत्रैव द्रष्टव्यः । प्रथमान्तस्यापि हेतुपरत्वेन निर्देशोपपत्तेः ॥ प्रत्यक्षं विशदं ज्ञानमित्यादिवत् ॥ तथाहि— प्रमाणं स्वापूर्वार्थव्यवसायात्मकं ज्ञानं भवति प्रमा-णत्वात् ॥ यत्तु स्वापूर्वार्थव्यवसायात्मकं ज्ञानं न भवति न तत्प्रमाणम् । यथा संशयादिर्घटादिश्च । प्रमाणं च विवादा-पन्नम् । तस्मात्स्वापूर्वार्थव्यवसायात्मकं ज्ञानमेव भवतीति ॥ न च प्रमाणत्वमसिद्धम् । सर्वप्रमाणस्वरूपवादिनां प्रमाणसामान्ये विप्रतिपत्त्यभावात् ॥ अन्यथा स्वेष्टानिष्टसाधनदूषणायोगात् । अथ धर्मिण एव हेतुत्वे प्रतिज्ञार्थैकदेशासिद्धो हेतुः स्यादिति चेन्न । विशेषं धर्मिणं कृत्वा सामान्यं हेतुं ब्रुवतां दोषाभावात् ॥ एतेना-पक्षधर्मत्वमपि प्रत्युक्तम् । सामान्यस्याशेषविशेषनिष्ठत्वात् ॥ न च पक्षधर्मताबलेन हेतोर्गमकत्वमपि त्वन्यथानुपपत्तिबलेनेति । सा चात्र नियमवती विपक्षे बाधकप्रमाणबलान्निश्चितैव । एतेन विरुद्धत्वमनैकान्तिकत्वं च निरस्तं बोद्धव्यम् । विरुद्धस्य व्यभि-चारिणश्चाविनाभावनियमनिश्चयलक्षणत्वायोगादतो भवत्येव साध्य-सिद्धिरिति केवलव्यतिरेकिणोऽपि हेतोर्गमकत्वात् । सात्मकं

जीवच्छरीरं प्राणादिमत्त्वादितिवत् ॥ अथेदानीं स्वोक्तप्रमाणलक्षणस्य ज्ञानमिति विशेषणं समर्थयमानः प्राह—

**हिताहितप्राप्तिपरिहारसमर्थं हि प्रमाणं,**
**ततो ज्ञानमेव तदिति ॥ २ ॥**

हितं सुखं तत्कारणं च । अहितं दुःखं तत्कारणं च । हितं चाहितं च हिताहिते । तयोः प्राप्तिश्च परिहारश्च तत्र समर्थम् ॥ हिशब्दो यस्मादर्थे । तेनायमर्थः सम्पादितो भवति । यस्माद्धिताहितप्राप्तिपरिहारसमर्थं प्रमाणं । ततस्तत्प्रमाणत्वेनाभ्युपगतं वस्तु ज्ञानमेव भवितुमर्हति । नाज्ञानरूपं सन्निकर्षादि ॥ तथा च प्रयोगः प्रमाणं ज्ञानमेव हिताहितप्राप्तिपरिहारसमर्थत्वात् । यत्तु न ज्ञानं तन्न हिताहितप्राप्तिपरिहारसमर्थम् । यथा घटादि । हिताहितप्राप्तिपरिहारसमर्थं च विवादापन्नम् । तस्मात् ज्ञानमेव भवतीति ॥ नचैतदसिद्धं । हितप्राप्तयेऽहितपरिहाराय च प्रमाणमन्वेषयन्ति प्रेक्षापूर्वकारिणो न व्यसनितया सकलप्रमाणवादिभिरभिमतत्त्वात् ॥ अत्राह सौगतः—भवतु नाम सन्निकर्षादिव्यवच्छेदेन ज्ञानस्यैव प्रामाण्यं न तदस्माभिर्निषिध्यते । तत्तु व्यवसायात्मकमेवेत्यत्र न युक्तिमुत्पश्यामः ।

अनुमानस्यैव व्यवसायात्मनः प्रामाण्याभ्युपगमात् । प्रत्यक्षस्य तु निर्विकल्पकत्वेऽप्यविसंवादकत्वेन प्रामाण्योपपत्तेरिति तत्राह —

**तन्निश्चयात्मकं समारोपविरुद्धत्वादनुमानवदिति ॥ ३ ॥**

तत् प्रमाणत्वेनाभ्युपगतं वस्त्विति धर्मिनिर्देशः । व्यवसायात्मकमिति साध्यम् । समारोपविरुद्धत्वादिति हेतुः । अनुमानवदिति दृष्टान्त इति ॥ अयमभिप्रायः— संशयविपर्यासानध्यवसायस्वभावसमारोपविरोधिग्रहणलक्षणव्यवसायात्मकत्वे सत्येवाविसंवादित्वमुपपद्यते । अविसंवादित्वे च प्रमाणत्वमिति चतुर्विधस्यापि समक्षस्य प्रमाणत्वमभ्युपगच्छता समारोपविरोधिग्रहणलक्षणं निश्चयात्मकमभ्युपगन्तव्यम् ॥ ननु तथापि समारोपविरोधिव्यवसायात्मकत्वयोः समानार्थकत्वात् कथं साध्यसाधनभाव इति न मन्तव्यम् । ज्ञानस्वभावतया तयोरभेदेऽपि व्याप्यव्यापकत्वधर्माधारतया भेदोपपत्तेः । शिंशपात्ववृक्षत्ववत् ॥

अथेदानीं सविशेषणमर्थग्रहणं समर्थयमानस्तदेव स्पष्टीकुर्वन्नाह —

**अनिश्चितोऽपूर्वार्थ इति ॥ ४ ॥**

यः प्रमाणान्तरेण संशयादिव्यवच्छेदेनानध्यवसितः सोऽपूर्वार्थः ॥ तेनेहादिज्ञानविषयस्यावग्रहादिगृहीतत्वेऽपि न पूर्वार्थत्वम् ।

अवग्रहादिनेहादिविषयभूतावान्तरविशेषनिश्चयाभावात् ॥ अथोक्तप्रकार एवापूर्वार्थः किमन्योऽप्यस्तीत्याह—

**दृष्टोऽपि समारोपात्तादृगिति** ॥ ५ ॥

दृष्टोऽपि गृहीतोऽपि न केवलमानिश्चित एवेत्यपिशब्दार्थः। तादृगपूर्वार्थो भवति। समारोपादिति हेतुः ॥ एतदुक्तं भवति—गृहीतमपि ध्यामलिताकारतया यन्निर्णेतुं न शक्यते तदपि वस्त्वपूर्वमिति व्यपदिश्यते प्रवृत्तसमारोपाव्यवच्छेदात् ॥ ननु भवतु नामापूर्वार्थव्यवसायात्मकत्वं विज्ञानस्य स्वव्यवसायं तु न विद्म इत्यत्राह—

**स्वोन्मुखतया प्रतिभासनं स्वस्य व्यवसाय इति** ॥ ६ ॥

स्वस्योन्मुखता स्वोन्मुखता तया स्वोन्मुखतया स्वानुभवतया प्रतिभासनं स्वस्य व्यवसायः ॥ अत्र दृष्टान्तमाह—

**अर्थस्येव तदुन्मुखतयेति** ॥ ७ ॥

तच्छब्देनार्थोऽभिधीयते। यथाऽर्थोन्मुखतया प्रतिभासनमर्थव्यवसायस्तथा स्वोन्मुखतया प्रतिभासनं स्वस्य व्यवसायो भवति ॥ अत्रोल्लेखमाह—

**घटमहमात्मना वेद्मीति** ॥ ८ ॥

ननु ज्ञानमर्थमेवाध्यवस्यति न स्वात्मानम्। आत्मानं फलं वेत्ति

केचित् । कर्तृकर्मणोरेव प्रतीतिरित्यपरे । कर्तृकर्मक्रियाणामेव प्रतीतिरित्यन्ये । तेषां मतमखिलमपि प्रतीतिबाधितमिति दर्शयन्नाह--

**कर्मवत्कर्तृकरणक्रियाप्रतीतेरिति ॥ ९ ॥**

ज्ञानविषयभूतं वस्तु कर्माभिधीयते । तस्यैव ज्ञप्तिक्रियया व्याप्यत्वात् । तस्येव तद्वत् । कर्त्ता आत्मा । करणं प्रमाणम् । क्रिया प्रमितिः । कर्त्ता च करणं च क्रिया च तासां प्रतीतिः तस्या इति हेतौ का प्रागुक्तानुभवोल्लेखे यथाक्रमं तत्प्रतीतिर्द्रष्टव्या ॥ ननु शब्दपरामर्शसाचिवेयं प्रतीतिर्न वस्तुत्वबलोपजातेत्यत्राह--

**शब्दानुच्चारणेऽपि स्वस्यानुभवनमर्थवदिति ॥ १० ॥**

यथा घटादिशब्दानुच्चारणेऽपि घटाद्यनुभवस्तथाऽहमहमिकया योऽयमन्तर्मुखाकारतयावभासः स शब्दानुच्चारणेऽपि स्वयमनुभूमत इत्यर्थः ॥ अमुमेवार्थमुपपत्तिपूर्वकं परंप्रति सोल्लुण्ठमाचष्टे--

**को वा तत्प्रतिभासनमर्थमध्यक्षमिच्छंस्तदेव तथा नेच्छेत् ॥ ११ ॥**

को वा लौकिकः परीक्षको वा । तेन ज्ञानेन प्रतिभासितुं शीलं यस्य स तथोक्तस्तं प्रत्यक्षविषयमिच्छन् विषयिधर्मस्य

विषये उपचारात् तदेव ज्ञानमेव तथा प्रत्यक्षत्वेन नेच्छेन् :
अपि त्विच्छेदेव । अन्यथा अप्रामाणिकत्वप्रसङ्गः स्यादित्यर्थः ॥
अत्रोदाहरणमाह --

**प्रदीपवदिति १२ ॥**

इदमत्र तात्पर्यम्—ज्ञानं स्वावभासने स्वातिरिक्तसजातीयार्थान्तरानपेक्षं प्रत्यक्षार्थगुणत्वे सति अदृष्टानुयायिकरणत्वात्प्रदीपभासुराकारवत् ॥ अथ भवतु नामोक्तलक्षणलक्षितं प्रमाणं, तथापि तत्प्रामाण्यं स्वतः परतो वा । न तावत्स्वतः अविप्रतिपत्तिप्रसङ्गात् । नापि परतः— अनवस्थाप्रसङ्गादिति मतद्वयमाशंक्य तन्निराकरणेन स्वमतमवस्थापयन्नाह—

**तत्प्रामाण्यं स्वतः परतश्चेति ॥ १३ ॥**

सोपस्कारााणि हि वाक्यानि भवन्ति । तत इदं प्रतिपत्तव्यं—अभ्यासदशायां स्वतोऽनभ्यासदशायां च परत इति ॥ तेन प्रागुक्तैकान्तद्वयनिरासः । नचानभ्यासदशायां परतःप्रामाण्येऽप्यनवस्था समाना, ज्ञानान्तरस्याभ्यस्तविषयस्य स्वतः प्रमाणभूतस्याङ्गीकरणात् ॥ अथवा प्रामाण्यमुत्पत्तौ परत एव । विशिष्टकारणप्रभवत्वाद्विशिष्टकार्यस्येति । विषयपरिच्छित्तिलक्षणे प्रवृत्तिलक्षणे वा स्वकार्ये अभ्यासेतरदशापेक्षया क्वचित्स्वतः परतश्चेति

निश्चीयते ॥ ननूत्पत्तौ विज्ञानकारणातिरिक्तकारणान्तरसव्यपेक्षत्वमसिद्धम् । प्रामाण्यस्य तदितरस्यैवाभावात् ॥ गुणाख्यमस्तीति वाङ्मात्रं, विधिमुखेन कार्यमुखेन वा गुणानामप्रतीतेः ॥ नाप्यप्रामाण्यं स्वत एव प्रामाण्यं तु परत एवेति विपर्ययः शक्यते कल्पयितुम् ॥ अन्वयव्यतिरेकाभ्यां हि त्रिरूपाल्लिङ्गादेव केवलात् प्रामाण्यमुत्पद्यमानं दृष्टम् । प्रत्यक्षादिष्वपि तथैव प्रतिपत्तव्यं नान्यथेति । तत एवाऽऽसोक्तत्वगुणसद्भावेऽपि न तत्कृतमागमस्य प्रामाण्यम् । तत्रहि गुणेभ्यो दोषाणामभावस्तदभावाच्च संशयविपर्यासलक्षणाप्रामाण्यद्वयासत्त्वेऽपि प्रामाण्यमौत्सर्गिकमनपादितमास्त एवेति । ततः स्थितं प्रामाण्यमुत्पत्तौ न सामग्र्यन्तरसापेक्षमिति ॥ नापि विषयपरिच्छित्तिलक्षणे स्वकार्ये स्वगृहणसापेक्षम् । अगृहीतप्रामाण्यादेव ज्ञानाद्विषयपरिच्छित्तिलक्षणकार्यदर्शनात् ॥ ननु न परिच्छित्तिमात्रं प्रमाणकार्यं तस्य मिथ्याज्ञानेऽपि सद्भावात् । परिच्छित्तिविशेषं तु नागृहीतप्रामाण्यं विज्ञानं जनयतीति ॥ तदपि बालविलसितम् । नहि प्रामाण्यग्रहणोत्तरकालमुत्पत्त्यवस्थातः परिच्छित्तेर्विशेषोऽवभासते, गृहीतप्रामाण्यादपि विज्ञानान्निर्विशेषविषयपरिच्छेदोपलब्धेः ॥ ननु परिच्छित्तिमात्रस्य शुक्तिकायां रजतज्ञानेऽपि सद्भावा-

त्तस्यापि प्रमाणकार्यत्वप्रसङ्ग इति चेत्– भवेदेवं, यद्यर्थान्यथात्व-प्रत्ययस्वहेतूत्थदोषज्ञानाभ्यां तन्नापोद्येत ॥ तस्माद्यत्र कारण-दोषज्ञानं बाधकप्रत्ययो वा नोदेति, तत्र स्वत एव प्रामाण्यमिति ॥ नचैवमप्रामाण्येऽप्याशङ्कनीयं, तस्य विज्ञानकारणातिरिक्तदोषस्वभावसामग्रीसव्यपेक्षतयोत्पत्तेः निवृत्ति-लक्षणे च स्वकार्ये स्वग्रहणसापेक्षत्वात् ॥ तद्धि यावन्न ज्ञानं न तावत्स्वविषयात्पुरुषं निवर्तयतीति ॥ तदेतत्सर्वमनल्पतमो-विलसितम् ॥ तथाहि— न तावत्प्रामाण्यस्योत्पत्तौ सामग्र्यन्त-रापेक्षत्वमसिद्धम् । आप्तप्रणीतत्वलक्षणगुणसन्निधाने सत्येवा-प्तप्रणीतवचनेषु प्रामाण्यदर्शनात् । यद्भावाभावाभ्यां यस्योत्पत्त्य-नुत्पत्ती तत् तत्कारणकमिति लोकेऽपि सुप्रसिद्धत्वात् ॥ यदुक्तम्— "विधिमुखेन कार्यमुखेन वा गुणानामप्रतीतिरिति" तत्र तावदाप्तप्रणीतशब्दे न प्रतीतिर्गुणानामित्ययुक्तं आप्तप्रणीत-त्वहानिप्रसङ्गात् ॥ अथ चक्षुरादौ गुणानामप्रतीतिरित्युच्यते तदप्ययुक्तम् । नैर्मल्यादिगुणानामबलाबालादिभिरप्युपलब्धेः ॥ अथ नैर्मल्यं स्वरूपमेव न गुणः तर्हि हेतोरविनाभाववैकल्यमपि स्वरूपविकलतैव न दोष इति समानम् ॥ अथ तद्वैकल्यमेव दोषः तर्हि लिङ्गस्य चक्षुरादेर्वा तत्स्वरूपसाकल्यमेव गुणः कथं

म भवेत्? । आप्तोक्तेऽपि शब्दे मोहादिलक्षणस्य दोषस्याभाव-मेव यथार्थज्ञानादिलक्षणगुणसद्भावमभ्युपगच्छन्नन्यत्र तथा नेच्छ-तीति कथमनुन्मत्तः? । अथोक्तमेव– शब्दे गुणाः सन्तोऽपि न प्रामाण्योत्पत्तौ व्याप्रियन्ते किन्तु दोषाभाव एवेति ॥ सत्यमुक्तं, किन्तु न युक्तमेतत् । प्रतिज्ञामात्रेण साध्यसिद्धेरयोगात् ॥ नहि गुणेभ्यो दोषाणामभाव इत्यत्र किञ्चिन्निबन्धनमुत्पश्यामोऽन्यत्र महा मोहात् ॥ अथानुमानेऽपि त्रिरूपलिङ्गमात्रजनितप्रामाण्योपलब्धि-रेव तत्र हेतुरिति चेन्न । उक्तोत्तरत्वात् ॥ तत्र हि त्रैरूप्यमेव गुणो यथा तद्वैकल्यं दोष इति नासंमतो हेतुः । अपि चाप्रामाण्ये-ऽप्येवं वक्तुं शक्यत एव । तत्र हि दोषेभ्यो गुणानामभावस्तद-भावाच्च प्रामाण्यासत्त्वे अप्रामाण्यमौत्सर्गिकमास्त इत्यप्रामाण्यं स्वत एवेति तस्य भिन्नकारणप्रभवत्ववर्णनमुन्मत्तभाषितमेव स्यात् ॥ किञ्च गुणेभ्यो दोषाणामभाव इत्यभिदधता गुणेभ्यो गुणा एवेत्यभिहितं स्यात् । भावान्तरस्वभावत्त्वादभावस्य । ततोऽप्रामाण्यसत्त्वं प्रा-माण्यमेवेति नैतावता परपक्षप्रतिक्षेपः । अविरोधकत्त्वात् । तथा अनुमानतोऽपि गुणाः प्रतीयन्त एव, तथाहि– प्रामाण्यं विज्ञान-कारणातिरिक्तकारणप्रभवं, विज्ञानान्यत्त्वे सति कार्यत्त्वात् अप्रामा-ण्यवत् ॥ तथा प्रमाणप्रामाण्ये भिन्नकारणजन्ये, भिन्नकार्यत्वात् ।

घटवस्त्रवदिति च ॥ ततः स्थितं प्रामाण्यमुत्पत्तौ परापेक्षमिति ॥ तथा विषयपरिच्छित्तिलक्षणे प्रवृत्तिलक्षणे वा स्वकार्ये स्वग्रहणं नापेक्षत इति नैकान्तः क्वचिदभ्यस्तविषय एव परानपेक्षत्वव्यवस्थानात् ॥ अनभ्यस्ते तु जलमरीचिकासाधारणप्रदेशे जलज्ञानं परापेक्षमेव । सत्यमिदं जलं, विशिष्टाकारधारित्वात् घटचेटिकापेटकदर्दुरारावसरोजगन्धवत्त्वाच्च, परिदृष्टजलवदित्यनुमानज्ञानादर्थक्रियाज्ञानाच्च, स्वतःसिद्धप्रामाण्यात्प्राचीनज्ञानस्य यथार्थत्वमाकल्पमवकल्प्यत एव ॥ यदप्याभिहितं प्रामाण्यग्रहणोत्तरकालमुत्पत्त्यवस्थातः परिच्छित्तेर्विशेषो नावभासत इति । तत्र यद्यभ्यस्तविषयेनावभासत इत्युच्यते तदा तदिष्यत एव । तत्र प्रथममेव निःसंशयं विषयपरिच्छित्तिविशेषाभ्युपगमात् ॥ अनभ्यस्तविषये तु तद्ग्रहणोत्तरकालमस्त्येव विषयावधारणस्वभावपरिच्छित्तिविशेषः । पूर्वं प्रमाणाप्रमाणसाधारण्या एव परिच्छित्तेरुत्पत्तेः ॥ ननु प्रामाण्यपरिच्छित्त्योरभेदात्कथं पौर्वापर्यमिति?। नैवम्। नहि सर्वोऽपि परिच्छित्तिः प्रामाण्यात्मिका, प्रामाण्यं तु परिच्छित्त्यात्मकमेवेति न दोषः ॥ यदप्युक्तम्— बाधककारणदोषज्ञानाभ्यां प्रामाण्यमपोद्यत इति— तदपि फल्गुभाषितमेव । अप्रामाण्येऽपि तथा वक्तुं शक्यत्वात् ॥ तथाहि— प्रथममप्रमाणमेव ज्ञानमुत्पद्यते पश्चादबाधबोधगुणज्ञानोत्त-

रकालं तदपोद्यत इति । तस्मात्प्रामाण्यमप्रामाण्यं वा स्वकार्ये क्वचिदभ्यासानभ्यासापेक्षया स्वतः परतश्चेति निर्णेतव्यमिति ॥

देवस्य सम्मतमपास्तसमस्तदोषं। वीक्ष्य प्रपञ्चरुचिरं रचितं समस्य॥ माणिक्यनन्दिविभुना शिशुबोधहेतो- । र्मानस्वरूपममुना स्फुटमभ्यधायि ॥ १ ॥

इति परीक्षामुखलघुवृत्तौ प्रमाणस्य स्वरूपोद्देशः ॥ १ ॥

---

अथ प्रमाणस्वरूपविप्रतिपत्तिं निरस्येदानीं संख्याविपतिप्रत्तिं प्रतिक्षिपन्सकलप्रमाणभेदसन्दर्भसंग्रहपरं प्रमाणेयत्ताप्रतिपादकं वाक्यमाह—

॥ तद्द्वेधति ॥ १ ॥

तच्छब्देन प्रमाणं परामृश्यते । तत्प्रमाणं स्वरूपेणावगतं द्वेधा द्विप्रकारमेव । सकलप्रमाणभेदानामत्रैवान्तर्भावात् ॥ तद्द्वित्वमध्यक्षानुमानप्रकारेणापि सम्भवतीति तदाशङ्कानिराकरणार्थं सकलप्रमाणभेदसंग्रहशालिनीं संख्यां प्रव्यक्तीकरोति—

॥ प्रत्यक्षेतरभेदादिति ॥ २ ॥

प्रत्यक्षं वक्ष्यमाणलक्षणं, इतरत्परोक्षं, ताभ्यां भेदात्प्रमाणस्येति शेषः ॥ न हि परपरिकल्पितैकद्वित्रिचतुःपञ्चषट्प्रमाणसंख्यानियमे निखिलप्रमाणभेदानामन्तर्भावविभावना शक्या कर्तुम् ॥ तथाहि—

प्रत्यक्षैकप्रमाणवादिनश्चार्वाकस्य नाध्यक्षे लैङ्गिकस्यान्तर्भावो युक्तः तस्य तद्विलक्षणत्वात् । सामग्रीस्वरूपभेदात् ॥ अथ नाप्रत्यक्षं प्रमाणमस्ति विसंवादसम्भवात् । निश्चिताविनाभावाल्लिङ्गाल्लिङ्गिनि ज्ञानमनुमानमित्यानुमानिकशासनं, । तत्र च स्वभावलिङ्गस्य बहुलमन्यथाऽपि भावो दृश्यते । तथाहि कषायरसोपेतानामामलकानामेतद्देशकालसम्बन्धिनां दर्शनेऽपि देशान्तरे कालान्तरे द्रव्यान्तरसम्बन्धे च अन्यथाऽपि दर्शनात्स्वभावहेतुर्व्यभिचार्येव लताच्यूतवल्लताशिंशपादिसम्भावनाच्च ॥ तथा कार्यलिङ्गमपि गोपालघटिकादौ धूमस्य शक्रमूर्ध्नि चान्यथाऽपि भावात्पावकव्यभिचार्येव । ततः प्रत्यक्षमेवैकं प्रमाणमस्यैवाविसंवादकत्त्वादिति ॥ तदेतद्बालविलसितमिवाभात्युपपत्तिशून्यत्त्वात् ॥ तथाहि— किमप्रत्यक्षस्योत्पादककारणाभावादालम्बनाभावाद्वा प्रामाण्यं निषिध्यते? ॥ तत्र न तावत्प्राक्तनः पक्षः । तदुत्पादकस्य सुनिश्चितान्यथानुपपत्तिनियतनिश्चयलक्षणस्य साधनस्य सद्भावात् ॥ नो खल्वप्युदीचीनः पक्षः । तदालम्बनस्य पावकादेः सकलविचारचतुरचेतसि सर्वदा प्रतीयमानत्त्वात् ॥ यदपि स्वभावहेतोर्व्यभिचारसम्भावनमुक्तम् । तदप्यनुचितमेव— स्वभावमात्रस्याहेतुत्त्वात् । व्याप्यरूपस्यैव स्वभावस्य व्यापकम्प्रति गमकत्वाभ्युपगमात् ॥ न च व्याप्यस्य व्यापकव्यभिचारित्वं व्याप्यत्त्व-

विरोधप्रसङ्गात् ॥ किञ्च एवं-वादिनो नाध्यक्षं प्रमाणं व्यवतिष्ठते। तत्राप्यसंवादस्यागौणत्त्वस्य च प्रामाण्याविनाभावित्वेन निश्चेतुमशक्यत्त्वात्। यच्च कार्यहेतोरप्यन्यथापि सम्भावनं तदप्यशिक्षितलक्षितं सुविवेचितस्य कार्यस्य कारणाव्यभिचारित्त्वात्। यादृशो हि धूमो ज्वलनकार्यं भूधरनितम्बादावतिबहलधवलतया प्रसर्पन्नुपलभ्यते, न तादृशो गोपालघटिकादाविति ॥ यदप्युक्तम् "शक्रमूर्द्धनि धूमस्यान्यथापि भाव इति" तत्र किमयं शक्रमूर्द्धा अग्निस्वभावोऽन्यथा वा? । यद्यग्निस्वभावस्तदाग्निरेवेति कथं तदुद्भूतधूमस्यान्यथाभावः शक्यते कल्पयितुम् ॥ अथानग्निस्वभावस्तदा तदुद्भवो धूम एव न भवतीति कथं तस्य तद्व्यभिचारित्वमिति ॥ तथाचोक्तम्– अग्निस्वभावः शक्रस्य मूर्द्धा चेदग्निरेव सः । अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेदिति ॥ १ ॥ किञ्च प्रत्यक्षं प्रमाणमिति कथमयं परं प्रतिपादयेत्। परस्य प्रत्यक्षेण गृहीतुमशक्यत्वात्। व्याहारादिकार्यप्रदर्शनात्तं प्रतिपद्येतेति चेत्– आयातं तर्हि कार्यात्करणानुमानम् ॥ अथ लोकव्यवहारापेक्षयेप्यत एवानुमानमपि परलोकादावेवानभ्युपगमात्तदभावादिति। कथं तदभावोऽनुपलब्धेरिति चेत्– तदाऽनुपलब्धिलिङ्गजनितमनुमानमपरमापतितमिति ॥ प्रत्यक्षप्रामाण्यमपि स्वभावहेतुजातानुमितिमन्तरेण नोपप-

त्तिमियर्त्तीति प्रागेवोक्तमित्युपरम्यते ॥ यदप्युक्तं धर्मकीर्तिना—प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः। प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचिदिति ॥ २ ॥ ततः प्रत्यक्षमनुमानमिति प्रमाणद्वयमेवेति सौगतः। सोऽपि न युक्तवादी। स्मृतेरविसंवादिन्यास्तृतीयायाः प्रमाणभूतायाः सद्भावात् ॥ न च तस्या विसंवादादप्रामाण्यम्। दत्तग्रहादिविलोपापत्तेः ॥ अथानुभूयमानस्य विषयस्याभावात् स्मृतेरप्रामाण्यं न तथापि अनुभूतेनार्थेन सालम्बनत्वोपपत्तेः। अन्यथा प्रत्यक्षस्याप्यनुभूतार्थविषयत्वादप्रामाण्यमनिवार्यं स्यात् स्वविषयावभासनं स्मरणेऽप्यविशिष्टमिति ॥ किञ्च स्मृतेरप्रामाण्येऽनुमानवार्ताऽपि दुर्लभा। तया व्याप्तेरविषयीकरणे तदुत्थानायोगादिति ॥ तत इदं वक्तव्यम्— "स्मृतिः प्रमाणम्, अनुमानप्रामाण्यान्यथानुपपत्तेरिति" सैव प्रत्यक्षानुमानस्वरूपतया प्रमाणस्य द्वित्वसंख्यानियमं विघटयतीति किं नश्चिन्तया ॥ तथा प्रत्यभिज्ञानमपि सौगतीयप्रमाणसंख्यां विघटयत्येव। तस्यापि प्रत्यक्षानुमानयोरनन्तर्भावात् ॥ ननु तदिति स्मरणमिदमिति प्रत्यक्षमिति ज्ञानद्वयमेव। न ताभ्यां विभिन्नं प्रत्यभिज्ञानाख्यं वयं प्रतिपद्यमानं प्रमाणान्तरमुपलभामहे। ततः कथं तेन प्रमाणसंख्याविघटनमिति तदप्यघटितमेव। यतः स्मरणप्रत्यक्षाभ्यां प्रत्यभि-

ज्ञानेविषयस्यार्थस्य गृहीतुमशक्यत्वात् ॥ पूर्वोत्तरविवर्तवर्त्येकद्रव्यं हि प्रत्यभिज्ञाविषयः। न च तत्स्मरणेनोपलम्य(क्ष्य)ते तस्यानुभूतविषयत्वात् । नापि प्रत्यक्षेण तस्य वर्त्तमानविवर्तवर्तित्वात् ॥ यदप्युक्तम्— "ताभ्यां भिन्नमन्यत् ज्ञानं नास्तीति"। अभेदपरामर्शरूपतया भिन्नस्यैवावभासनात् ॥ न च तयोरन्यतरस्य वा भेदपरामर्शकत्वमस्ति विभिन्नाविषयत्वात् ॥ नचैतत्प्रत्यक्षेऽन्तर्भवत्यनुमाने वा तयोः पुरोऽवस्थितार्थविषयत्वेन।विनाभूतलिङ्गसम्भावितार्थविषयत्वेन च पूर्वापरविकारव्याप्येकत्वाविषयत्वात् ॥ नापि स्मरणे, तेनापि तदेकत्वस्याविषयीकरणात् ॥ अथ संस्कारस्मरणसहकृतमिन्द्रियमेव प्रत्यभिज्ञानं जनयतीन्द्रियजं चाध्यक्षमेवेति न प्रमाणान्तरमित्यपरः। सोऽप्यतिबालिश एव। स्वविषयाभिमुख्येन प्रवर्त्तमानस्येन्द्रियस्य सहकारिशतसमवधानेऽपि विषयान्तरप्रवृत्तिलक्षणातिशयायोगात् । विषयान्तरं चातीतसाम्प्रतिकावस्थाव्याप्येकद्रव्यमिन्द्रियाणां रूपादिगोचरचारित्वेन चरितार्थत्वाच्च ॥ नाप्यदृष्टसहकारिसव्यपेक्षमिन्द्रियमेकत्वविषयं। उक्तदोषादेव ॥ किञ्चादृष्टसंस्कारादिसव्यपेक्षादेवात्मनस्तद्विज्ञानमिति किन्न कल्प्यते? । दृश्यते हि स्वप्नसारस्वतचाण्डालिकादिविद्यासंस्कृतादात्मनो विशिष्टज्ञानोत्पत्तिरिति ॥ नन्वञ्जनादि संस्कृतमपि

चक्षुः सातिशयमुपलभ्यते इति चेत् न तस्य स्वार्थानतिक्रमेणै-वातिशयोपलब्धेर्न विषयान्तरग्रहणलक्षणातिशयस्य ॥ तथाचो-क्तम्— यत्राऽप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ॥ दूरसूक्ष्मा-दिदृष्टौ स्यान्नरूपे श्रोत्रवृत्तित इति ॥ २ ॥ नन्वस्य वार्तिकस्य सर्वज्ञप्रतिषेधपरत्वाद्विषमो दृष्टान्त इतिचेन्न— इन्द्रियाणां विषयान्त-रप्रवृत्तावतिशयाभावमात्रे सादृश्यात् दृष्टान्तत्वोपपत्तेः ॥ न हि सर्वो दृष्टान्तधर्मो दार्ष्टान्तिके भवितुमर्हति । अन्यथा दृष्टान्त एव न स्यादिति । ततः स्थितं प्रत्यक्षानुमानाभ्यामर्थान्तरं प्रत्यभिज्ञानं सामग्रीस्वरूपभेदादिति ॥ न चैतदप्रमाणं ततोऽर्थं परिच्छिद्य प्रवर्त्त-मानस्यार्थक्रियायामविसंवादात् प्रत्यक्षवदिति ॥ नचैकत्वापलापे बन्धमोक्षादिव्यवस्था अनुमानव्यवस्था वा । एकत्वाभावे बद्धस्यैव मोक्षादेर्गृहीतसम्बन्धस्यैव लिङ्गस्यादर्शनादनुमानस्य च व्यवस्थायो-गादिति ॥ नचास्य विषये बाधकप्रमाणसद्भावादप्रामाण्यं तद्विषये प्रत्यक्षस्य लैङ्गिकस्य चाप्रवृत्तेः । प्रवृत्तौ वा प्रत्युत साधकत्वमेव न बाधकत्वमित्यलमतिप्रसंगेन ॥ तथा सौगतस्य प्रमाणसंख्याविरो-धिविध्वस्तबाधं तर्काख्यमुपढौकत एव ॥ नचैतत्प्रत्यक्षेऽन्तर्भवति । साध्यसाधनयोर्व्याप्यव्यापकभावस्य साकल्येन प्रत्यक्षाविषयत्वात् ॥ न हि तदियतो व्यापारान्कर्तुं शक्नोति । अविचारकत्वात् सन्नि-

हितविषयत्वाच्च ॥ नाप्यनुमाने, तस्यापि देशादिविषयविशिष्टत्वेन व्याप्त्यविषयत्वात् । तद्विषयत्वे वा प्रकृतानुमानान्तरविकल्पद्वयानतिक्रमात् ॥ तत्र प्रकृतानुमानेन व्याप्तिप्रतिपत्ताविततरेतराश्रयत्वप्रसङ्गः । व्याप्तौ हि प्रतिपन्नायामनुमानमात्मानमासादयति । तदात्मलाभे च व्याप्तिप्रतिपत्तिरिति अनुमानान्तरेणाविनाभावप्रतिपत्तावनवस्थाचमूरी परपक्षचमूं चञ्चमीति इति नानुमानगम्या व्याप्तिः ॥ नापि संख्यापरिकल्पितैरागमोपमानार्थापत्त्यभावैः साकल्येनाविनाभावावगतिः । तेषां समयसंगृहीतसादृश्यान्यथाऽनन्यथाभूताभावविषयत्वेन व्याप्त्यविषयत्वात् । परैस्तथाऽनभ्युपगमाच्च ॥ अथ प्रत्यक्षपृष्ठभाविविकल्पात् साकल्येन साध्यसाधनभावप्रतिपत्तेर्न प्रमाणान्तरं तदर्थं मृग्यमित्यपरः । सोऽपि न युक्तवादी– "विकल्पस्याध्यक्षगृहीतविषयस्य तदगृहीतविषयस्य वा तद्व्यवस्थापकत्वम्" । आद्ये पक्षे दर्शनस्येव तदनन्तरभाविनिर्णयस्यापि नियतविषयत्वेन व्याप्त्यगोचरत्वात् ॥ द्वितीयपक्षेऽपि विकल्पद्वयमुपढौकत एव । तद्विकल्पज्ञानं प्रमाणमन्यथा वेति? । प्रथमपक्षे प्रमाणान्तरमनुमन्तव्यं, प्रमाणद्वयेऽनन्तर्भावात् ॥ उत्तरपक्षे तु न ततोऽनुमानव्यवस्था ॥ न हि व्याप्तिज्ञानस्याप्रामाण्ये तत्पूर्वकमनुमानं प्रमाणमास्कन्दति सन्दिग्धादिलिङ्गादप्युत्पद्यमानस्य

प्रामाण्यप्रसङ्गात् । ततो व्याप्तिज्ञानं सविकल्पमविसंवादकं च प्रमाणं प्रमाणद्वयादन्यदभ्युपगम्यमिति न सौगताभिमतप्रमाणसंख्यानियमः ॥ एतेनानुपलम्भात्कारणव्यापकानुपलम्भाच्च कार्यकारणव्याप्यव्यापकभावसंवित्तिरिति वदन्नपि प्रत्युक्तः । अनुपलम्भस्य प्रत्यक्षविषयत्वेन कारणाद्यनुपलम्भस्य च लिंगत्वेन तज्जनितस्यानुमानत्वात् प्रत्यक्षानुमानाभ्यां व्याप्तिग्रहणपक्षोपक्षिप्तदोषानुषंगात् ॥ एतेन प्र-प्रत्यक्षफलेनोहापोहविकल्पज्ञानेन व्याप्तिप्रतिपत्तिरित्यप्यपास्तम् । प्रत्यक्षफलस्यापि प्रत्यक्षानुमानयोरन्यतरत्वे व्याप्तेरविषयीकरणात् । तदन्यत्वे च प्रमाणान्तरत्वमनिवार्यमिति ॥ अथ व्याप्तिविकल्पस्य फलत्वान्न प्रामाण्यमिति न युक्तम् । फलस्याप्यनुमानलक्षणफलहेतुतया प्रमाणत्वाविरोधात् ॥ तथा सन्निकर्षफलस्यापि विशेषणज्ञानस्य विशेष्यज्ञानलक्षणफलापेक्षया प्रमाणत्वमिति न वैशेषिकाभ्युपगतोहापोहविकल्पः प्रमाणान्तरत्वमतिवर्त्तते ॥ एतेन त्रिचतुःपञ्चषट्प्रमाणवादिनोऽपि सांख्याक्षपादप्रभाकरजैमिनीयाः स्वप्रमाणसंख्यां न व्यवस्थापयितुं क्षमा इति प्रतिपादितमवगन्तव्यम् ॥ उक्तन्यायेन स्मृतिप्रत्यभिज्ञानतर्काणां तदभ्युपगतप्रमाणसंख्यापरिपंथित्वादिति प्रत्यक्षेतरभेदात् द्वे एव प्रमाणे इति स्थितम् ॥ अथेदानीं प्रथमप्रमाणभेदस्य स्वरूपं निरूपयितुमाह—

॥ विशदं प्रत्यक्षमिति ॥ ३ ॥

ज्ञानमिति वर्तते । प्रत्यक्षमिति धर्मिनिर्देशः । विशदज्ञानात्मकं साध्यम् । प्रत्यक्षत्त्वादिति हेतुः ॥ तथाहि— प्रत्यक्षं विशदज्ञानात्मकमेव प्रत्यक्षत्त्वात् । यन्न विशदज्ञानात्मकं तन्न प्रत्यक्षं, तथा परोक्षम् । प्रत्यक्षं च विवादापन्नं, तस्माद्विशदज्ञानात्मकमिति ॥ प्रतिज्ञार्थैकदेशासिद्धो हेतुरिति चेत का पुनः प्रतिज्ञा तदेकदेशो वा? धर्मिधर्मसमुदायः प्रतिज्ञा । तदेकदेशो धर्मो धर्मी वा? । हेतुः प्रतिज्ञार्थैकदेशासिद्ध इति चेन्न— धर्मिणो हेतुत्वे असिद्धत्वायोगात् । तस्य पक्षप्रयोगकालवद्धेतुप्रयोगेऽप्यसिद्धत्वायोगात् ॥ धर्मिणो हेतुत्त्वे अनन्वयदोष इति चेत् न— विशेषस्य धर्मित्वात् । सामान्यस्य च हेतुत्वात् तस्य च विशेषेष्वनुगमो विशेषनिष्ठत्वात्सामान्यस्य ॥ अथ साध्यधर्मस्य हेतुत्वे प्रतिज्ञार्थैकदेशासिद्धत्वमिति तदप्यसम्मतम् । साध्यस्य स्वरूपेणैवासिद्धत्वात् ॥ न प्रतिज्ञार्थैकदेशासिद्धत्वेन तस्यासिद्धत्वं, धर्मिणा व्यभिचारात् ॥ सपक्षे वृत्त्यभावाद्धेतोरनन्वय इत्यप्यसत् । सर्वभावानां क्षणभङ्गसङ्गममेवाङ्गशृङ्गारमङ्गीकुर्वतां ताथागतानां सत्त्वादिहेतूनामनुदयप्रसङ्गात् । विपक्षे बाधकप्रमाणाभावात् । पक्षव्यापकत्वाच्चान्वयवत्वं प्रकृतेऽपि समानम् ॥ इदानीं स्वोक्तमेव विशदत्वं व्याचष्टे—

॥ प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासनं वैशद्यमिति ॥ ४ ॥

एकस्याः प्रतीतेरन्या प्रतीतिः प्रतीत्यन्तरम् । तेनाव्यवधानं तेन प्रतिभासनं वैशद्यम् ॥ यद्यप्यवायस्यावग्रहेहाप्रतीतिभ्यां व्यवधानं, तथापि न परोक्षत्वं विषयविषयिणोर्भेदनाप्रतिपत्तेः ॥ यत्र विषयविषयिणोर्भेदे सति व्यवधानं तत्र परोक्षत्वम् । तर्ह्यनुमानाध्यक्षविषयस्यैकात्मग्राह्यस्याग्नेरभिन्नस्योपलम्भादध्यक्षस्य परोक्षतेति तदप्ययुक्तम् । भिन्नविषयत्वाभावात् ॥ विसदृशसामग्रीजन्यभिन्नविषया प्रतीतिः प्रतीत्यन्तरमुच्यते नान्यदिति न दोषः ॥ न केवलमेतदेव । विशेषणवत्तया वा प्रतिभासनं सविशेषवर्णसंस्थानादिग्रहणं वैशद्यम् ॥ "तच्च प्रत्यक्षं द्वेधा मुख्यसंव्यवहारभेदादिति" मनसि कृत्य प्रथमं सांव्यवहारिकप्रत्यक्षस्योत्पादिकां सामग्रीं तद्भेदं च प्राह—

॥ इन्द्रियानिन्द्रियनिमित्तं देशतः सांव्यवहारिकमिति ॥ ५ ॥

विशदं ज्ञानमिति चानुवर्तते । देशतो विशदं ज्ञानं सांव्यवहारिकमित्यर्थः । समीचीनः प्रवृत्तिनिवृत्तिरूपो व्यवहारः संव्यवहारः तत्र भवं सांव्यवहारिकम् । भूयः किंभूतमिन्द्रियानिन्द्रियनिमित्तम् । इन्द्रियं चक्षुरादि, अनिन्द्रियं मनः ते निमित्तं कारणं यस्य । समस्तं

व्यस्तं च कारणमभ्युपगन्तव्यम् ॥ इन्द्रियप्राधान्यादनिन्द्रियबला-धानादुपजातमिन्द्रियप्रत्यक्षम्, अनिन्द्रियादेव विशुद्धिसव्यपेक्षादुप-पजायमानमानिन्द्रियप्रत्यक्षम् ॥ तत्रेन्द्रियप्रत्यक्षमवग्रहादिधारणाप-र्यन्ततया चतुर्विधमपि बह्वादिद्वादशभेदमष्टचत्वारिंशत्संख्यं प्रती-न्द्रियं प्रतिपत्तव्यम् । अनिन्द्रियप्रत्यक्षस्य चोक्तप्रकारेणाष्टचत्वारिं-शद्भेदेन मनोनयनरहितानां चतुर्णामपीन्द्रियाणां व्यञ्जनावग्रहस्या-ष्टचत्त्वारिंशद्भेदेन च समुदितस्येन्द्रियानीन्द्रियप्रत्यक्षस्य षट्त्रिंश-दुत्तरा त्रिशती संख्या प्रतिपत्तव्या ॥ ननु स्वसंवेदनभेदमन्यदपि-प्रत्यक्षमस्ति, तत्कथं नोक्तमिति न वाच्यम् । तस्य सुखादिज्ञान-स्वरूपसंवेदनस्य मानसप्रत्यक्षत्वात् । इन्द्रियज्ञानस्वरूपसंवेदनस्य चेन्द्रियसमक्षत्वादन्यथा तस्य स्वव्यवसायायोगात् ॥ स्मृत्यादिस्व-रूपसंवेदनं मानसमेवेति नापरं स्वसंवेदनं नामाध्यक्षमस्ति ॥ ननु प्रत्यक्षस्योत्पादकं कारणं वदता ग्रन्थकारेणेन्द्रियानिन्द्रियवदर्थालो-कावपि किं न कारणत्वेनोक्तौ? तदवचने कारणानां साकल्यस्या-संग्रहाद्विनेयव्यामोह एव स्यात् । तदियत्ताऽनवधारणात ॥ न च भगवतः परमकारुणिकस्य चेष्टा तद्व्यामोहाय प्रभवतीत्याशङ्कायामु-च्यते—

**नार्थालोकौ कारणं परिच्छेद्यत्वात्तमोवत् ॥ ६ ॥**

सुगममेतत् ॥ ननु बाह्यालोकाभावं विहाय तमसोऽन्यस्याभावात्साधनविकलो दृष्टान्त इति । नैवम् । एवं सति वा ह्यालोकस्यापि तमोभावादन्यस्यासम्भवात्तेजोद्रव्यस्यासम्भव इति विस्तरेणैतदलङ्कारे प्रतिपादितं बोद्धव्यम् ॥ अत्रैव साध्ये हेत्वन्तरमाह—

**॥ तदन्वयव्यतिरेकानुविधानाभावाच्च । केशोण्डुकज्ञानवन्नक्तंचरज्ञानवच्च ॥ ७ ॥**

अत्र व्याप्तिः । यद्यस्यान्वयव्यतिरेकौ नानुविदधाति न तत्तत्कारणकं, यथा केशोंडुकज्ञानं, नानुविधत्ते च ज्ञानमर्थान्वयव्यतिरेकाविति । तथा आलोकेऽपि । एतावान् विशेषस्तत्र नक्तंचरदृष्टान्त इति । नक्तंचरा मार्जारादयः ॥ ननु विज्ञानमर्थजनितमर्थाकारं चार्थस्यग्राहकम् । तदुत्पत्तिमन्तरेण विषयंप्रति नियमायोगात् । तदुत्पत्तेरालोकादावविशिष्टत्त्वात्ताद्रूप्यसहिताया एव तस्यास्तंप्रति नियमहेतुत्त्वात् भिन्नकालत्त्वेऽपि ज्ञानज्ञेययोर्ग्राह्यग्राहकभावाविरोधात् ॥ तथाचोक्तम्-- भिन्नकालं कथं ग्राह्यमितिचेद्ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञास्तदाकारार्पणक्षमम् ॥ इत्याशङ्कायामिदमाह---

**॥ अतज्जन्यमपि तत्प्रकाशकं प्रदीपवत् ॥ ८ ॥**

अर्थाजन्यमप्यर्थप्रकाशकमित्यर्थः । अतज्जन्यत्वमुपलक्षणम् । तेनातदाकारमपीत्यर्थः । उभयत्रापि प्रदीपो दृष्टान्तः । यथा प्रदी-

पस्यातज्जन्यस्याऽतदाकारधारिणोऽपि तत्प्रकाशकत्वं, तथा ज्ञानस्यापीत्यर्थः ॥ ननु यद्यर्थादजातस्यार्थरूपाननुकारिणो ज्ञानस्यार्थसाक्षात्कारित्वं तदा नियतदिग्देशकालवर्त्तिपदार्थप्रकाशप्रतिनियमे हेतोरभावात्सर्वं विज्ञानमप्रतिनियतविषयं स्यादिति शङ्कायामाह—

**॥ स्वावरणक्षयोपशमलक्षणयोग्यतया हि**
**प्रतिनियतमर्थं व्यवस्थापयति ॥ ९ ॥**

स्वानि च तान्यावरणानि च स्वावरणानि तेषां क्षय उदयाभावः । तेषामेव सदवस्था उपशमः तावेव लक्षणं यस्या योग्यतायास्तया हेतुभूतया प्रतिनियतमर्थं व्यवस्थापयति प्रत्यक्षमिति शेषः । हि यस्मादर्थे । यस्मादेवं ततो नोक्तदोष इत्यर्थः ॥ इदमत्र तात्पर्यम्—कल्पयित्वाऽपि तादूप्यं तदुत्पत्तिं तदध्यवसायं च योग्यताऽवश्याऽभ्युपगन्तव्या । ताद्रूप्यस्य समानार्थैस्तदुत्पत्तेरिन्द्रियादिभिस्तद्वयस्यापि समानार्थसमनन्तरप्रत्ययैस्तात्रितयस्यापि शुक्ले शंखे पीताकारज्ञानेन व्यभिचाराद्योग्यताश्रयणमेव श्रेय इति ॥ एतेन यदुक्तं परेण— " अर्थेनघटयत्येनां नहि मुक्त्वार्थरूपताम् । तस्मात्प्रमेयाधिगतेः प्रमाणं मेयरूपतेति " तन्निरस्तम् ॥ समानार्थाकारनानाज्ञानेषु मेयरूपतायाः सद्भावात् ॥ न च परेषां सारूप्यं नामास्ति वस्तुभूतमिति योग्यतयैवार्थप्रतिनियम इति स्थितम् ॥ इ-

दानीं कारणत्वात्परिच्छेद्योऽर्थ इति मतं निराकरोति—

॥ कारणस्य च परिच्छेद्यत्वे करणादिना व्यभिचार इति ॥ १० ॥

करणादिकारणं परिच्छेद्यमिति तेन व्यभिचारः । न ब्रूमः कारणत्वात्परिच्छेद्यत्वमपितु परिच्छेद्यत्वात्कारणत्वमिति चेन्न । तथापि केशोंडुकादिना व्यभिचारात् ॥ इदानीमतीन्द्रियप्रत्यक्षं व्याचष्टे—

॥ सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतो मुख्यम् ॥ ११ ॥

सामग्री द्रव्यक्षेत्रकालभावलक्षणा, तस्या विशेषः समग्रतालक्षणः । तेन विश्लेषितानि अखिलान्यावरणानि येन तत्तथोक्तम् । किं विशिष्टं? अतीन्द्रियमिन्द्रियाण्यातिक्रान्तम् । पुनरपि कीदृशमशेषतः सामस्त्येन विशदम् । अशेषतो वैशद्ये किं कारणमिति चेत्— प्रतिबन्धाभाव इति ब्रूमः । तत्रापि किं कारणमिति चेत्— अतीन्द्रियत्वमनावरणत्वं चेति ब्रूमः ॥ एतदपि कुत इत्याह—

सावरणत्वे करणजन्यत्वे च प्रतिबन्धसम्भवात् ॥ १२ ॥

नन्ववधिमनःपर्यययोरनेनासंग्रहादव्यापकमेतल्लक्षणमिति न वाच्यम् । तयोरपि स्वविषयेऽशेषतो विशदत्वादिधर्मसम्भवात् ।

नचैवं मतिश्रुतयोरित्यतिव्याप्तिपरिहारः। तदेतदतीन्द्रियमवधिमनःप-र्ययकेवलप्रभेदात्त्रिविधमपि मुख्यं प्रत्यक्षमात्मसन्निधिमात्रापेक्षत्त्वा-दिति॥ नन्वशेषविषयविशदावभासि ज्ञानस्य तद्वतो वा प्रत्यक्षादि-प्रमाणपञ्चकाविषयत्त्वेनाभावप्रमाणविषमविषधरविध्वस्तसत्ताकत्त्वात् कस्य मुख्यत्वम्? ॥ तथाहि– नाध्यक्षमशेषज्ञविषयं, तस्य रूपादि-नियतगोचरचारित्त्वात् सम्बद्धवर्तमानविषयत्त्वाच्च॥ न चाशेषवेदी सम्बद्धो वर्तमानश्चेति। नाप्यनुमानात्तत्सिद्धिः। अनुमानं हि गृहीतसम्बन्धस्यैकदेशदर्शनादसन्निकृष्टे बुद्धिः॥ न च सर्वज्ञ-सद्भावाविनाभाविकार्यलिङ्गं स्वभावलिङ्गं वा सम्पश्यामः। तदृज्ञप्तेः पूर्वं तत्स्वभावस्य तत्कार्यस्य वा तत्स्वभावाविनाभाविनो निश्चेतुम-शक्तेः॥ नाप्यागमात्तत्सद्भावः। स हि नित्योऽनित्यो वा तत्स-द्भावं भावयेत्। न तावन्नित्यः– तस्यार्थवादरूपस्य कर्मविशेषसं-स्तवनपरत्त्वेन पुरुषविशेषावबोधकत्वायोगात्॥ अनादेरागमस्या-दिमत्पुरुषवाचकत्त्वाघटनाच्च॥ नाप्यनित्य आगमः सर्वज्ञं साव-यति। तस्यापि तत्प्रणीतस्य तन्निश्चयमन्तरेण प्रामाण्यानिश्चया-दितरेतराश्रयत्वाच्च॥ इतरप्रणीतस्य त्वनासादितप्रमाणभावस्या-शेषज्ञप्ररूपणपरत्वं नितरामसम्भाव्यमिति सर्वज्ञसदृशस्यापरस्य ग्र-हणासम्भवाच्च नोपमानम्। अनन्यथाभूतस्यार्थस्याभावान्नार्थापत्तिरपि

सर्वज्ञाभावबोधिकेति धर्माद्युपदेशस्य व्यामोहादपि सम्भवात् ।। द्विविधो ह्युपदेशः सम्यङ्मिथ्योपदेशभेदात् । तत्र मन्वादीनां सम्यगुपदेशो यथार्थज्ञानोदयवेदमूलत्वात् । बुद्धादीनां तु व्यामोहपूर्वकः तदमूलत्वात् तेषामवेदार्थज्ञत्वात् ।। ततः प्रमाणपञ्चकाविषयत्वादभावप्रमाणस्यैव प्रवृत्तिस्तेन चाभाव एव ज्ञायते । भावांशे प्रत्यक्षादिप्रमाणपञ्चकस्य व्यापारादिति ।। अत्र प्रतिविधीयते । यत्तावदुक्तम्— प्रत्यक्षादिप्रमाणाविषयत्वमशेषज्ञस्येति तदयुक्तं, तद्ग्राहकस्यानुमानस्य सम्भवात् ।। तथाहि— कश्चित्पुरुषः सकलपदार्थसाक्षात्कारी । तद्ग्रहणस्वभावत्त्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वात् । यद्यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययं तत्तत्साक्षात्कारि । यथाऽपगततिमिरं लोचनं रूपसाक्षात्कारि ।। तद्ग्रहणस्वभावत्त्वे सति प्रक्षीणप्रतिबन्धप्रत्ययश्च विवादापन्नः कश्चिदिति सकलपदार्थग्रहणस्वभावत्वं नात्मनोऽसिद्धं चोदनातः सकलपदार्थपरिज्ञानस्यान्यथायोगादन्धस्येवादर्शाद्रूपप्रतिपत्तेरिति ।। व्याप्तिज्ञानोत्पत्तिबलाच्चाशेषविषयज्ञानसम्भवः केवलं वैशद्ये विवादः । तत्र चावरणापगम एव कारणं रजोनीहाराद्यावृतार्थज्ञानस्येव तदपगम इति ।। प्रक्षीणप्रतिबन्धप्रत्ययत्वं कथमिति चेदुच्यते— दोषावरणे क्वचिन्निर्मूलं प्रलयमुपव्रजतः प्रकृष्यमाणहानिकत्त्वात् । यस्य प्रकृष्यमाणहानिः

न कश्चिन्निर्मूलं प्रलयमुपव्रजति । यथाग्निपुटपाकापसारितकिट्टकालिकाद्यन्तरङ्गबहिरङ्गमलद्वयात्मनि हेम्नि मलमिति निर्ह्रासातिशयवन्तौ च दोषावरणे इति ॥ कथं पुनर्विवादाध्यासितस्य ज्ञानस्यावरणं सिद्धं? प्रतिषेधस्य विधिपूर्वकत्वात् इति ॥ अत्रोच्यते— विवादापन्नं ज्ञानं सावरणं, विशदतया स्वविषयानवबोधकत्वाद्रजोनीहाराद्यन्तरितार्थज्ञानवदिति ॥ न चात्मनोऽमूर्तत्वादावारकावृत्त्ययोगः । अमूर्ताया अपि चेतनाशक्तेर्मदिरामदनकोद्रवादिभिरावरणोपपत्तेः ॥ न चेन्द्रियस्य तैरावरणं, इन्द्रियाणामचेतनानामप्यनावृतप्रत्ययत्वात् । स्मृत्यादिप्रतिबन्धायोगात् ॥ नापि मनसस्तैरावरणमात्मव्यतिरेकेणान्यस्य मनसो निषेत्स्यमानत्वात् । ततो नामूर्तस्यावरणाभावः ॥ अतो नासिद्धं तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वम् । नापि विरुद्धं विपरीतनिश्चिताविनाभावात् । नाप्यनैकान्तिकं देशतः सामस्त्येन वा विपक्षे वृत्त्यभावात् । विपरीतार्थोपस्थापकप्रत्यक्षागमासम्भवान्नकालात्ययापदिष्टत्वम् । नापि सत्प्रतिपक्षं प्रतिपक्षसाधनस्य हेतोरभावात् ॥ अथेदमस्त्येव विवादापन्नः पुरुषो नाशेषज्ञो वक्तृत्वात्पुरुषत्वात्पाण्यादिमत्वाच्च । रथ्यापुरुषवदिति ॥ नैतच्चारु वक्तृत्वादेरसम्यग्घेतुत्वात् ॥ वक्तृत्वं हि दृष्टेष्टविरुद्धार्थवक्तृत्वं तदविरुद्धवक्तृत्वं वक्तृत्वसामान्यं वा गत्यन्तराभावात् ॥ न तावत् प्रथमः

पक्षः सिद्धसाध्यतानुषङ्गात् । नापि द्वितीयः पक्षः विरुद्धत्वात् । तदविरुद्धवक्तृत्वं हि ज्ञानातिशयमन्तरेण नोपपद्यत इति ॥ वक्तृत्वसामान्यमपि विपक्षाविरुद्धत्वान्न प्रकृतसाध्यसाधनायालं, ज्ञानप्रकर्षे वक्तृत्वापकर्षादर्शनात्प्रत्युत ज्ञानातिशयवतो वचनातिशयस्यैव सम्भवात् ॥ एतेन पुरुषत्वमपि निरस्तं– पुरुषत्वं हि रागादिदोषदूषितं, तदा सिद्धसाध्यता, तददूषितं तु विरुद्धं वैराग्यज्ञानादिगुणयुक्तपुरुषत्वस्याशेषज्ञत्वमन्तरेणायोगात् ॥ पुरुषत्वसामान्यं तु सन्दिग्धविपक्षव्यावृत्तिकमिति सिद्धं सकलपदार्थसाक्षात्कारित्वं कस्यचित्पुरुषस्य। अतोऽनुमानादिति न प्रमाणपञ्चकाविषयत्वमशेषज्ञस्य ॥ अथास्मिन्ननुमानेऽर्हतः सर्ववित्त्वमनर्हतो वा? । अनर्हतश्चेदर्हद्वाक्यमप्रमाणं स्यात् । अर्हतश्चेत्सोऽपि न श्रुत्या सामर्थ्येन वाऽवगन्तुं पार्यते । स्वशक्त्या दृष्टान्तानुग्रहेण वा हेतोः पक्षान्तरेऽपि तुल्यवृत्तित्वादिति । तदेतत्परेषां स्ववधाय कृत्योत्थापनं, एवं विधविशेषप्रश्नस्य सर्वज्ञसामान्याभ्युपगमपूर्वकत्वात् । अन्यथा न कस्याप्यशेषज्ञत्वमित्येवं वक्तव्यम् । प्रसिद्धानुमानेऽप्यस्य दोषस्य सम्भवेन, जात्युत्तरत्वाच्च ॥ तथाहि– नित्यः शब्दः प्रत्यभिज्ञायमानत्वादित्युक्ते व्यापकः शब्दो नित्यः प्रसाध्यते अव्यापको वा? । यद्यव्यापकः तदा व्यापकत्वेनोपकल्प्यमानो न कश्चिदर्थं

पुष्णाति । अथ व्यापकः सोऽपि न। श्रुत्या सामर्थ्येन वाऽवगम्यते । स्वशक्त्या दृष्टान्तानुग्रहेण वा । पक्षान्तरेऽपि तुल्यवृत्तित्वादिति ॥ सिद्धमतो निर्दोषात्साधनादशेषज्ञत्वमिति ॥ यच्चाभावप्रमाणकवलितसत्ताकत्वमशेषज्ञस्येति तदयुक्तमेवानुमानस्य तद्ग्राहकस्य सद्भावे सति प्रमाणपञ्चकाभावमूलस्याभावप्रमाणस्योपस्थापनायोगात् " गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् । मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षयेति " च भावत्कं दर्शनम् । तथा च कालत्रयत्रिलोकलक्षणवस्तुसद्भावग्रहणेऽन्यत्रान्यदा गृहीतस्मरणे च सर्वज्ञनास्तिताज्ञानमभावप्रमाणं युक्तम् । नापरथा ॥ न च कस्यचिदर्वाग्दर्शिनस्त्रिजगत्त्रिकालज्ञानमुपपद्यते सर्वज्ञस्यातीन्द्रियस्य वा । सर्वतत्त्वं हि चेतोधर्मतयाऽतीन्द्रियं तदपि न प्राकृतपुरुषविषयमिति कथमभावप्रमाणमुदयमासादयेत् ॥ असर्वज्ञस्य तदुत्पादसामग्र्या असम्भवात् । सम्भवे वा तथाज्ञातुरेव सर्वज्ञत्वमिति । अत्राधुना तदभावसाधनमित्यपि न युक्तं सिद्धसाध्यतानुषंगात् ॥ ततः सिद्धं मुख्यमतीन्द्रियज्ञानमशेषतो विशदम्। सार्वज्ञज्ञानस्यातीन्द्रियत्त्वाद्श्रुत्यादिदर्शनं तद्रसास्वादनदोषोऽपि परिहृत एव ॥ कथमतीन्द्रियज्ञानस्य वैशद्यमिति चेत् । यथा सत्यस्वप्नज्ञानस्य भावनाज्ञानस्य चेति । दृश्यते हि भावनाबलादतद्देशवस्तुनोऽपि विशददर्शनमिति ॥

पिहिते कारागारे तमसि च सूचीमुखाग्रदुर्भेद्ये ॥ मयि च निमीलितनयने तथापि कान्ताननं व्यक्तमिति बहुलमुपलम्भात् ॥ ननु च नावर्णविश्लेषादशेषज्ञत्वमपि तु तनुकरणभुवनादिनिमित्तत्वेन। न चात्र तन्वादीनां बुद्धिमध्देतुकत्वमसिद्धमनुमानादेस्तस्य सुप्रसिद्धत्वात्। तथाहि— विमत्यधिकरणभावापन्नं उर्वीपर्वततरुतन्वादिकं बुद्धिमद्धेतुकं कार्यत्वादचेतनोपादानत्वात्सन्निवेशविशिष्टत्वाद्वा वस्त्रादिवदिति ॥ आगमोऽपि तदावेदकः श्रूयते— "विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतः पात्। सम्बाहुभ्यां धमतिसम्पतत्रैर्द्यावाभूमी जनयन्देव एकः" तथा व्यासवचनं च "अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥ १ ॥" न चाचेतनैरेव परमाण्वादिकारणैः पर्याप्तत्त्वाद्बुद्धिमतः कारणस्यानर्थक्यम्। अचेतनानां स्वयंकार्योत्पत्तौ व्यापारायोगात्तुर्यादिवत् ॥ न चैवं चेतनस्यापि चेतनान्तरपूर्वकत्त्वादनवस्था। तस्य सकलपुरुषज्येष्ठत्वान्निरतिशयत्वात्सर्वज्ञबीजस्य क्लेशकर्मविपाकाशयैरपरामृष्टत्वादनादिभूतानश्वरज्ञानसम्भवाच्च ॥ यदाह पतञ्जलिः— "॥ क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषः सर्वज्ञः स पूर्वेषामपि गुरुः कालेनाविच्छेदादिति च" "ऐश्वर्यमप्रतिहतं सहजो विरागस्तृप्तिर्निसर्गजनिता वशितेन्द्रियेषु ॥ आत्यान्तिकं सुखमनाव-

रणा च शक्तिर्ज्ञानं च सर्वविषयं भगवंस्तवैव" इत्यवधृतवचनाच्च ॥ न चात्र कार्यत्वमसिद्धम् । सावयवत्वेन कार्यत्वसिद्धेः ॥ नापि विरुद्धं, विपक्ष एव वृत्त्यभावात् ॥ नाप्यनैकान्तिकं, विपक्षे परमाण्वादावप्रवृत्तेः । प्रतिपक्षसिद्धिनिबन्धनस्य साधनान्तरस्याभावान्न प्रकरणसमम् ॥ अथ तन्वादिकं बुध्दिमध्देतुकं न भवति दृष्टकर्तृकप्रासादादिविलक्षणत्वादाकाशवदित्यस्त्येव प्रतिपक्षसाधनमिति । नैतद्युक्तं, हेतोरसिध्दत्वात् । सन्निवेशविशिष्टत्वेन प्रासादादिसमानजातीयत्वेन तन्वादीनामुपलम्भात् ॥ अथ यादृशः प्रासादादौ सन्निवेशविशेषो दृष्टो न तादृशस्तन्वादावितिचेन्न सर्वात्मना सदृशस्य कस्यचिदप्यभावात् । सातिशयसन्निवेशो हि सातिशयं कर्त्तारं गमयति प्रासादादिवत् । न च दृष्टकर्तृकत्वादृष्टकर्तृकत्वाभ्यां बुध्दिमन्निमित्तेतरत्वसिध्दिः । कृत्रिमैर्मणिमुक्ताफलादिभिर्व्यभिचारात् ॥ एतेनाचेतनोपादानत्वादिकमपि समर्थितमिति सूक्तं बुद्धिमद्धेतुकत्वं ततश्च सर्ववेदित्वमिति ॥ तदेतत्सर्वमनुमानमुद्राद्रविणदारिद्रवचनमेव कार्यत्वादेरसम्यग्धेतुत्वेन तज्जनितज्ञानस्य मिथ्यारूपत्वात् ॥ तथाहि– कार्यत्वं स्वकारणसत्तासमवायः स्यादभूत्वाभावित्वमक्रियादर्शिनोऽपि कृतबुध्द्युत्पादकत्वं कारणव्यापारानुविधायित्वं वा स्यादृत्यन्तराभावात् । अथाद्यः पक्षस्तदा योगिनामशेषकर्मक्षये प-

क्षान्तःपातिनि हेतौ कार्यत्वलक्षणस्याप्रवृत्तेर्भागासिद्धत्वम् ॥ न च तत्र सत्तासमवायः स्वकारणसमवायो वा समस्ति, तत्प्रक्षयस्य प्रध्वंसरूपत्वेन सत्तासमवाययोरभावात् सत्ताया द्रव्यगुणक्रियाधारत्वाभ्यनुज्ञानात् समवायस्य च परैर्द्रव्यादिपञ्चपदार्थवृत्तित्वाभ्युपगमात् ॥ अथाभावपरित्यागेन भावस्यैव विवादाध्यासितस्य पक्षीकरणान्नायं दोषः प्रवेशभागिति चेत्— तर्हि मुक्त्यर्थिनां तदर्थमीश्वराराधनमनर्थकमेव स्यात् । तत्र तस्याकिञ्चित्करत्वात् सत्तासमवायस्य विचारमधिरोहतः शतधा विशीर्यमाणत्वात् स्वरूपासिद्धं च कार्यत्वम् ॥ स हि समुत्पन्नानां भवेदुत्पद्यमानानां वा? । यद्युत्पन्नानां, सतामसतां वा? । न तावदसतां खरविषाणादेरपि तत्प्रसङ्गात् । सतां चेत् सत्तासमवायात्स्वतो वा । न तावत्सत्तासमवायादनवस्थाप्रसङ्गात् प्रागुक्तविकल्पद्वयाऽनतिवृत्तेः । स्वतःसतां तु सत्तासमवायानर्थक्यम् ॥ अथोत्पद्यमानानां सत्तासम्बन्धो निष्ठासम्बन्धयोरेककालत्वाभ्युपगमादिति मतम् । तदा सत्तासम्बन्ध उत्पादाद्भिन्नः किं वा अभिन्न इति । यदि भिन्नस्तदोत्पत्तेरसत्त्वाविशेषादुत्पत्त्यभावयोः किंकृतो भेदः । अथोत्पत्तिसमाक्रान्तवस्तुसत्त्वेनोत्पत्तिरपि तथा व्यपदिश्यते इति मतम् । तदपि अतिजाड्यवल्गितमेव । उत्पत्तिसत्त्वप्रतिविवादे वस्तुसत्त्वस्यातिदुर्घटत्वात् ॥ इतरेतराश्रयदोषश्च ।

इत्युत्पत्तिसत्त्वे वस्तुनि तदेककालीनसत्तासम्बन्धावगमस्तदवगमे च तत्रत्यसत्त्वेनोत्पत्तिसत्त्वनिश्चय इति ॥ अथैतद्दोषपरिजिहीर्षया तयोरैक्यमभ्यनुज्ञायते, तर्हि तत्सम्बन्ध एव कार्यत्वमिति । ततो बुद्धिमद्धेतुकत्वे गगनादिभिरनेकान्तः ॥ एतेन स्वकारणसम्बन्धोऽपि चिन्तितः ॥ अथोभयसम्बन्धो कार्यत्वमिति मतिः सापि न युक्ता । तत्सम्बन्धस्यापि कादाचित्कत्वे समवायस्यानित्यत्वप्रसङ्गात् घटादिवत् अकादाचित्कत्वे सर्वदोपलम्भप्रसङ्गः ॥ अथ वस्तूत्पादककारणानां सन्निधानाभावान्न सर्वदोपलम्भप्रसङ्गः ॥ ननु वस्तूत्पत्त्यर्थं कारणानां व्यापारः । उत्पादश्च स्वकारणसत्तासमवायः स च सर्वदाप्यस्ति, इति तदर्थं कारणोपादानमनर्थकमेव स्यात् । अभिव्यक्त्यर्थं तदुपादानमित्यपि वार्त्तं वस्तूत्पादापेक्षया अभिव्यक्तेरघटनात् । वस्त्वपेक्षयाऽभिव्यक्तौ कारणसम्पातात्प्रागपि कार्यवस्तुसद्भावप्रसङ्गात् । तल्लक्षणत्वाद्वस्तुसत्त्वस्य प्राक् सत एव हि केनचित् तिरोहितस्याभिव्यञ्जकेनाभिव्यक्तिरस्तमस्तिरोहितस्य घटस्येव प्रदीपादिनेति । तन्नाभिव्यक्त्यर्थं कारणोपादानं युक्तं, तन्न स्वकारणसत्तासम्बन्धः कार्यत्वम् । नाप्यभूत्वाभावित्वम् । तस्यापि विचारासहत्वात् । अभूत्वाभावित्वं हि भिन्नकालक्रियाद्वयाधिकरणभूते कर्त्तरि सिद्धे सिद्धिमध्यास्ते । क्त्वान्तपदविशेषितवाक्यार्थत्वाद्भुक्त्वा

व्रजतीत्यादिवाक्यार्थवत् ॥ न चात्र भवनाभवनयोराधारभूतस्य कर्तुरनुभवोऽस्ति । अभवनाधारस्याविद्यमानत्वेन भवनाधारस्य च विद्यमानतया भावाभावयोरेकाश्रयविरोधात् । अविरोधे च तयोः पर्यायमात्रेणैव भेदो न वास्तव इति ॥ अस्तु वा यथाकथंचिदभूत्वाभावित्वं, तथापि तन्वादौ सर्वत्रानभ्युपगमाद्भागासिद्धम् । न हि महीमहीधराकूपारारामादयः प्रागभूत्वाभवन्तोऽभ्युपगम्यन्ते परैः । तेषां तैः सर्वदावस्थानाभ्युपगमात् ॥ अथ सावयवत्त्वेन तेषामपि सादित्वं प्रसाध्यते, तदप्यशिक्षितलक्षितम् । अवयवेषु वृत्तेरवयवैरारभ्यत्वेन च सावयवत्वानुपपत्तेः ॥ प्रथमपक्षे सावयवसामान्येनानेकान्तात् । द्वितीयपक्षे साध्याविशिष्टत्वात् ॥ अथ सन्निवेश एव सावयवत्वं तच्च घटादिवत् पृथिव्यादावुपलभ्यते इत्यभूत्वाभावित्वमभिधीयते तदप्यपेशलम् । सन्निवेशस्यापि विचारासहत्वात् ॥ स ह्यवयवसम्बन्धो भवेद्रचनाविशेषो वा । यद्यवयवसम्बन्धस्तदा गगनादिनानेकान्तः सकलमूर्तिमद्द्रव्यसंयोगनिबन्धनप्रदेशनानात्वस्यसद्भावात् । अथोपचरिता एव तत्र प्रदेशा इति चेत् तर्हि सकलमूर्तिमद्द्रव्यसम्बन्धस्याप्युपचरितत्वात्सर्वगतत्वमप्युपचरितं स्यात् । श्रोत्रस्यार्थक्रियाकारित्वं च न स्यात् । उपचरितप्रदेशरूपत्वात् ॥ धर्मादिना संस्काराच्चतः सेत्ययुक्तम् । उपचरितस्यासद्रूपस्य तेनोपकारा-

योगात् । खरविषाणस्येव ततो न किञ्चिदेतत् ॥ अथ रचनाविशेषस्तदा परम्प्रतिभागासिद्धत्वं तदवस्थमेवेति नाभूत्वाभावित्वं विचारं सहते ॥ नाप्याक्रियादर्शिनोऽपि कृतबुध्युत्पादकत्वम् । तद्धि कृतसमयस्याकृतसमयस्य वा भवेत् ॥ कृतसमयस्य चेत् गगनादेरपि बुद्धिमद्धेतुकत्वं स्यात् । तत्रापि खननोत्सेचनात् कृतमितिगृहीतसङ्केतस्य कृतबुद्धिसम्भवात् । सा मिथ्येति चेत् भवदीयापि किं न स्यात् । बाधासद्भावस्य प्रतिप्रमाणविरोधस्य चान्यत्रापि समानत्वात् । प्रत्यक्षेणोभयत्रापि कर्तुरग्रहणात् ॥ क्षित्यादिकं बुद्धिमद्धेतुकं न भवति अस्मदाद्यनवग्राह्यपरिमाणाधारत्वात् गगनादिवदिति प्रमाणस्य साधारणत्वात् । तन्न कृतसमयस्य कृतबुध्युत्पादकत्वम् ॥ नाप्यकृतसमयस्याऽसिद्धत्वादविप्रतिपत्तिप्रसङ्गाच्च ॥ कारणव्यापारानुविधायित्वं च कारणमात्रापेक्षया यदीष्यते तदा विरुद्धं साधनम् । कारणविशेषापेक्षया चेदितरेतराश्रयत्वम् । सिद्धे हि कारणविशेषे बुद्धिमति तदपेक्षया कारणव्यापारानुविधायित्वं कार्यत्वम् । ततस्तद्विशेषसिद्धिरिति सन्निवेशविशिष्टत्वमचेतनोपादानत्वं चोक्तदोषदुष्टत्वान्न पृथक् चिन्त्यते । स्वरूपभागासिध्दत्वादेस्तत्रापि सुलभत्वात् ॥ विरुध्दाश्चामी हेतवो दृष्टन्तानुग्रहेण सशरीरासर्वज्ञपूर्वकत्वसाधनात् । न धूमात्पावकानुमानेऽप्ययं दोषः । तत्र ता-

र्णोपाण्णादिविशेषाधाराग्निमात्रव्याप्तधूमस्य दर्शनात् । नैवमत्र सर्वज्ञासर्वज्ञकर्तृविशेषाधिकरणतत्सामान्येन कार्यत्वस्य व्याप्तिः सर्वज्ञस्य कर्तुरतोऽनुमानात्प्रागासिध्दत्वात् ॥ व्यभिचारिणश्चामी हेतवो बुध्दिमत्कारणमन्तरेणापि विद्युदादीनां प्रादुर्भावसम्भवात् ॥ सुप्ताद्यवस्थायामबुध्दिपूर्वकस्यापि कार्यस्य दर्शनात् ॥ तदवश्यं तत्रापि भर्गाख्यं कारणमित्यतिमुग्धविलसितं, तद्व्यापारस्याप्यसम्भवादशरीरत्वात् ॥ ज्ञानमात्रेण कार्यकारित्वाघटनादिच्छाप्रयत्नयोः शरीराभावेऽसम्भवात्तदसम्भवश्च पुरातनैर्विस्तरेणाभिहित आप्तपरीक्षादौ । अतः पुनरत्र नोच्यते ॥ यच्च महेश्वरस्य क्लेशादिभिरपरामृष्टत्वं निरतिशयत्वमैश्वर्याद्युपेतत्वं तत्सर्वमपि गगनाब्जसौरभव्यावर्णनमिव निर्विषयत्वादुपेक्षामर्हति । ततो न महेश्वरस्याशेषज्ञत्वम् । नापि ब्रम्हणः । तस्यापि सद्भावावेदकप्रमाणाभावात् ॥ न तावत्प्रत्यक्षं तदावेदकमविप्रतिपत्तिप्रसङ्गात् ॥ न चानुमानमविनाभाविलिङ्गाभावात् । ननु प्रत्यक्षं तद्ग्राहकमस्त्येव, अक्षिविस्फालनानन्तरं निर्विकल्पकस्य सन्मात्रविधिविषयतयोत्पत्तेः । सत्तायाश्च परमब्रह्मरूपत्वात् ॥ तथाचोक्तम्– अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं शुध्दवस्तुजम् ॥ न च विधिवत् परस्परव्यावृत्तिरप्यध्यक्षतः प्रतीयते

इति द्वैतसिद्धिः । तस्य निषेधाविषयत्वात् ॥ तथाचोक्तम् । आहु-र्विधातृप्रत्यक्षं न निषेधृविपश्चितः । नैकत्वे आगमस्तेन प्रत्यक्षेण प्रबाध्यते ॥ अनुमानादपि तत्सद्भावो विभाव्यत एव । तथाहि- ग्रामारामादयः पदार्थाः प्रतिभासान्तःप्रविष्टाः प्रतिभासमानत्वात् । यत्प्रतिभासते तत्प्रतिभासान्तःप्रविष्टम् । यथा प्रतिभासस्वरूपं प्रतिभासन्ते च विवादापन्ना इति ॥ तदागमानामपि पुरुष एवेदं यद्भूतं यच्च भाव्यमिति बहुलमुपलम्भात् । सर्वं वै खल्विदं ब्रह्म नेह नानास्ति किञ्चन ॥ आरामं तस्य पश्यन्ति न तं पश्यति कश्चन ॥ इति श्रुतेश्च ॥ ननु परमब्रह्मण एव परमार्थसत्त्वे कथं घटादिभेदोऽवभासत इति न चोद्यम् । सर्वस्यापि तद्विवर्ततयावभासनात् । न चाशेषभेदस्य तद्विवर्तत्वमसिद्धं प्रमाणप्रसिद्धत्वात् । तथाहि- विवादाध्यासितं विश्वमेककारणपूर्वकमेकरूपान्वितत्वात् । घटघटीशरावोदञ्चनादीनां मृद्रूपान्वितानां यथा मृदेककारणपूर्वकत्वं सद्रूपेणान्वितं च निखिलं वस्त्विति । तथाऽऽगमोऽप्यस्ति- "ऊर्णनाभ इवांशूनां चन्द्रकान्त इवाम्भसाम् । प्ररोहाणामिव प्लक्षः स हेतुः सर्वजन्मिनामिति ॥ १ ॥" तदेतन्मदिरारसास्वादगद्गदोदितमिव मदनकोद्रवाद्युपयोगजनितव्यामोहमुग्धविलसितमिव निखिलमवभासते विचारासहत्वात् ॥ तथा हि- यत्प्रत्यक्षसत्ताविषयत्वमभिहितं तत्र

किं निर्विशेषसत्ताविषयत्वं सविशेषसत्तावबोधकत्वम् वा? । न तावत्पौरस्त्यः पक्षः । सत्तायाः सामान्यरूपत्वात् । विशेषनिरपेक्षतयाऽनवभासनात् । शाबलेयादिविशेषानवभासने गोत्वाऽनवभासनवत् ॥ निर्विशेषं हि सामान्यं भवेच्छशविषाणवदित्यभिधानात् ॥ सामान्यरूपत्वं च सत्तायाः सत्सदित्यन्वयबुद्धिविषयत्वेन सुप्रसिद्धमेव ॥ अथ पाश्चात्यः पक्षः कक्षीक्रियते, तदा न परमपुरुषसिद्धिः । परस्परव्यावृत्ताकारविशेषाणामध्यक्षतोऽवभासनात् । यदपि साधनमभ्यधायि प्रतिभासमानत्वं तदपि न साधु, विचारासहत्वात् ॥ तथाहि प्रतिभासमानत्वं स्वतः परतो वा? । न तावत्स्वतोऽसिद्धत्वात् । परतश्चेद्विरुद्धम् । परतः प्रतिभासमानत्वं हि परं विना नोपपद्यते प्रतिभासनमात्रमपि न सिद्धिमधिवसति । तस्य तद्विशेषणान्तरीयकत्वात्तद्विशेषाभ्युपगमे च द्वैतप्रसक्तिः ॥ किञ्च धर्मिहेतुदृष्टान्ता अनुमानोपायभूताः प्रतिभासन्ते न वेति । प्रथमपक्षे प्रतिभासान्तःप्रविष्टाः प्रतिभासबहिर्भूता वा । यद्याद्यः पक्षस्तदा साध्यान्तःपातित्वान्न ततोऽनुमानम् । तद्बहिर्भावे तैरेव हेतोर्व्यभिचारः ॥ अप्रतिभासमानत्वेऽपि तद्व्यवस्थाभावात् ततो नानुमानमिति ॥ अथानाद्यविद्याविजृम्भितत्वात्सर्वमेतदसम्बद्धमित्यनल्पतमोविलसितम् । अविद्यायामप्युक्तदोषानुषङ्गात् । सकलविकल्पविकलत्वात्तस्या नैव

दोष इत्यप्यतिमुग्धभाषितम् । केनापि रूपेण तस्याः प्रतिभासाभावे तत्स्वरूपानवधारणात् ॥ अपरमप्यत्र विस्तरेण देवागमालङ्कारे चिन्तितामिति नेह प्रतन्यते ॥ यच्च परमब्रम्हविवर्त्तत्त्वमखिलभेदानामित्युक्तं । तत्राप्येकरूपेणान्वितत्वं हेतुरन्यत्रान्वीयमानद्वयाविनाभावित्वेन पुरुषाद्वैतं प्रतिबध्नातीति स्वेष्टविघातकारित्वाद्विरुद्धः । अन्वितत्वमेकहेतुके घटादावनेकहेतुके स्तम्भकुम्भाम्भोरुहादावप्युपलभ्यत इत्यनैकान्तिकश्च । किमर्थं चेदं कार्यमसौ विदधाति? अन्येन प्रयुक्तत्वात् कृपावशात् क्रीडावशात् स्वभावाद्वा? अन्येन प्रयुक्तत्वे स्वातन्त्र्यहानिर्द्वैतप्रसङ्गश्च । कृपावशादिति नोत्तरम् । कृपायां दुःखिनामकारुणप्रसङ्गात् । परोपकारकरणनिष्ठत्वात्तस्याः सृष्टेः प्रागनुकम्पाविषयप्राणिनामभावाच्च न सा युज्यते । कृपापरस्य प्रलयविधानायोगाच्च ॥ अदृष्टवशात्तद्विधाने स्वातन्त्र्यहानिः कृपापरस्य पीडाकारणादृष्टव्यपेक्षायोगाच्च ॥ क्रीडावशात्प्रवृत्तौ न प्रभुत्वं क्रीडोपायव्यपेक्षणाद्बालकवत् । क्रीडोपायस्य तत्साध्यस्य च युगपदुत्पत्तिप्रसङ्गश्च । सति समर्थे कारणे कार्यस्यावश्यम्भावात् । अन्यथा क्रमेणापि सा ततो न स्यात् ॥ अथ स्वभावादसौ जगन्निर्मिमीते यथाग्निर्दहति वायुर्वातीति मतं, तदपि बालभाषितमेव पूर्वोक्तदोषानिवृत्तेः ॥ तथाहि— क्रमवर्तिविवर्तजातमखिलमपि युग-

पद्युत्पद्येत । अपेक्षणीयस्य सहकारिणोऽपि तत्साध्यत्वेन यौगपद्य-सम्भवात् उदाहरणवैषम्यं च । वन्ह्यादेः कादाचित्कस्वहेतुजनितस्य नियतशक्त्यात्मकत्वोपपत्तेरन्यत्र नित्यव्यापिसमर्थैकस्वभावकारणजन्यत्वेन देशकालप्रतिनियमस्य कार्ये दुरुपपादात् ॥ तदेवं ब्रह्मणोऽसिद्धौ वेदानां तत्सुप्तप्रबुद्धावस्थात्वप्रतिपादनं परमपुरुषास्य-महाभूतनिःश्वसिताभिधानं च गगनारविन्दमकरन्दव्यावर्णनवदनवधेयार्थविषयत्वादुपेक्षामर्हति ॥ यच्चागमः प्रमाणं "सर्वं वै खल्विदं ब्रह्मेत्यादि" "ऊर्णनाभ इत्यादि" च तत्सर्वमुक्तविधिना अद्वैतविरोधीति नावकाशं लभते ॥ न चापौरुषेय आगमोऽस्तीत्यग्रे प्रपञ्चयिष्यते । तस्मान्न पुरुषोत्तमोऽपि विचारणां प्राञ्चति ॥

प्रत्यक्षेतरभेदभिन्नममलं मानं द्विधैवोदितम् ।
देवैर्दीप्तगुणैर्विचार्य विधिवत्संख्याततेः संग्रहात् ॥
मानानामिति तद्दिगप्यभिहितं श्रीरत्ननन्द्याह्वय-।
स्तद्व्याख्यानमदो विशुद्धधिषणैर्बोद्धव्यमव्याहतम् ॥ १ ॥

मुख्यसंव्यवहाराभ्यां प्रत्यक्षमुपदर्शितम् ।
देवोक्तमुपजीवद्भिः सूरिभिर्ज्ञापितं मया ॥ २ ॥

इति परीक्षामुखस्य लघुवृत्तौ द्वितीयः समुद्देशः ॥ २ ॥

---

अथेदानीमुद्दिष्टे प्रत्यक्षेतरभेदेन प्रमाणद्वित्वे प्रथमभेदं व्याख्याय, इतरद्व्याचष्टे—

॥ परोक्षमितरदिति ॥ १ ॥

उक्तप्रतिपक्षमितरच्छब्दो ब्रूते । ततः प्रत्यक्षादितरदिति लभ्यते, तच्च परोक्षमिति ॥ तस्य च सामग्रीस्वरूपे निरूपयन्नाह—

प्रत्यक्षादिनिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभेदमिति २

प्रत्यक्षादिनिमित्तमित्यत्रादिशब्देन परोक्षमपि गृह्यते । तच्च यथावसरं निरूपयिष्यते ॥ प्रत्यक्षादिनिमित्तं यस्य इति विग्रहः ॥ स्मृत्यादिषु द्वंद्वः ॥ ते भेदा यस्य इति विग्रहः ॥ तत्र स्मृतिं क्रमप्राप्तां दर्शयन्नाह—

॥ संस्कारोद्बोधनिबन्धना तदित्याकारा स्मृतिरिति ॥ ३ ॥

संस्कारस्योद्बोधः प्राकट्यं स निबन्धनं यस्याः सा तथोक्ता । तदित्याकारा तदित्युल्लेखिनी, एवम्भूता स्मृतिर्भवतीति शेषः ॥ उदाहरणमाह—

॥ स देवदत्तो यथेति ॥ ४ ॥

प्रत्यभिज्ञानं प्राप्तकालमाह—

॥ दर्शनस्मरणकारणकं सङ्कलनं प्रत्यभिज्ञानम् । तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादि ॥ ५ ॥

अत्र दर्शनस्मरणकारणकत्त्वात् सादृश्यादिविषयस्यापि प्रत्यभिज्ञानत्त्वमुक्तम्। येषां तु सादृश्यविषयमुपमानाख्यं प्रमाणान्तरं तेषां वैलक्षण्यादिविषयं प्रमाणान्तरमनुषज्येत ॥ तथा चोक्तम्— "॥ उपमानं प्रसिद्धार्थसाधर्म्यात्साध्यसाधनम्। तद्वैधर्म्यात्प्रमाणं किं स्यात्संज्ञिप्रतिपादनम् ॥ १ ॥ इदमल्पं महद्दूरमासन्नं प्रांशु नेति वा। व्यपेक्षातः समक्षेऽर्थे विकल्पः साधनान्तरमिति ॥ २ ॥ एषां क्रमेणोदाहरणं दर्शयन्नाह—

**यथा स एवायं देवदत्तः ॥ ६ ॥ गोसदृशो गवयः ॥ ७ ॥ गोविलक्षणो महिषः ॥ ८ ॥ इदमस्माद्दूरम् ॥ ९ ॥ वृक्षोऽयमित्यादि ॥ १० ॥**

आदिशब्देन— "पयोम्बुभेदी हंसः स्यात् षट्पादैर्भ्रमरः स्मृतः ॥ सप्तपर्णस्तु तत्त्वज्ञैर्विज्ञेयो विषमच्छदः ॥ १ ॥ पञ्चवर्णं भवेद्रत्नं मेचकाख्यं पृथुस्तनी ॥ युवतिश्चैकशृङ्गोऽपि गण्डकः परिकीर्तितः ॥ २ ॥ शरभोऽप्यष्टभिः पादैः सिंहश्चारुसटान्वितः ॥ इत्येवमादिशब्दश्रवणात्तथाविधानेव मरालादीनवलोक्य तथा सत्यापयति यदा तदा तत्सङ्कलनमपि प्रत्यभिज्ञानमुक्तं, दर्शनस्मरणकारणत्वाविशेषात् ॥ परेषां तु तत्प्रमाणान्तरमेवोपपद्यते उपमानादौ तस्यान्तर्भावाभावात्। अथोहोऽवसरप्राप्त इत्याह—

**॥ उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः ॥ ११ ॥**

**॥ इदमस्मिन्सत्येव भवत्यसति न भवत्येवेति च ॥ १२ ॥**

उपलम्भः प्रमाणमात्रमत्र गृह्यते। यदि प्रत्यक्षमेवोपलम्भशब्दे-नोच्यते तदा साधनेष्वनुमेयेषु व्याप्तिज्ञानं न स्यात् ॥ अथ व्याप्तिः सर्वोपसंहारेण प्रतीयते, सा कथमतीन्द्रियस्य साधनस्यातीन्द्रियेण साध्येन भवेदिति। नैवं प्रत्यक्षविषयेष्विवानुमानविषयेष्वपि व्याप्तेरविरोधात् ॥ तज्ज्ञानस्याप्रत्यक्षत्वाभ्युपगमात् ॥

उदाहरणमाह–

**॥ यथाग्नावेव धूमस्तदभावे न भवत्येवेति च ॥ १३ ॥**

इदानीमनुमानं क्रमायातमिति तल्लक्षणमाह–

**साधनात्साध्यविज्ञानमनुमानम् ॥ १४ ॥**

साधनस्य लक्षणमाह–

**॥ साध्याविनाभावित्वेन निश्चितो हेतुः ॥ १५ ॥**

ननु त्रैरूप्यमेव हेतोर्लक्षणं, तस्मिन्सत्येव हेतोरसिद्धादिदोष परिहारोपपत्तेः। तथाहि– पक्षधर्मत्वमसिद्धत्वव्यवच्छेदार्थमभिधीयते। सपक्षे सत्त्वं तु विरुद्धत्वापनोदार्थम्। विपक्षे चासत्त्वमेवानैकान्तिक व्युदासार्थमिति ॥ तदुक्तम्। "हेतोस्त्रिष्वपि रूपेषु निर्णयस्तेन वर्णितः। असिद्धाविपरीतार्थव्यभिचारिविपक्षतः।

अत्र दर्शनस्मरणकारणकत्त्वात् सादृश्यादिविषयस्यापि प्रत्यभिज्ञानत्वमुक्तम् । येषां तु सादृश्यविषयमुपमानाख्यं प्रमाणान्तरं तेषां वैलक्षण्यादिविषयं प्रमाणान्तरमनुषज्येत ॥ तथा चोक्तम्—"॥ उपमानं प्रसिद्धार्थसाधर्म्यात्साध्यसाधनम् । तद्वैधर्म्यात्प्रमाणं किं स्यात्संज्ञिप्रतिपादनम् ॥ १ ॥ इदमल्पं महद्दूरमासन्नं प्रांशु नेति वा । व्यपेक्षातः समक्षेऽर्थे विकल्पः साधनान्तरमिति ॥ २ ॥ एषां क्रमेणोदाहरणं दर्शयन्नाह—

**यथा स एवायं देवदत्तः ॥ ६ ॥ गोसदृशो गवयः ॥ ७ ॥ गोविलक्षणो महिषः ॥ ८ ॥ इदमस्माद्दूरम् ॥ ९ ॥ वृक्षोऽयमित्यादि ॥ १० ॥**

आदिशब्देन— "पयोम्बुभेदी हंसः स्यात् षट्पादैर्भ्रमरः स्मृतः ॥ सप्तपर्णस्तु तत्त्वज्ञैर्विज्ञेयो विषमच्छदः ॥ १ ॥ पञ्चवर्णं भवेद्रत्नं मेचकाख्यं पृथुस्तनी ॥ युवतिश्चैकशृङ्गोऽपि गण्डकः परिकीर्तितः ॥ २ ॥ शरभोऽप्यष्टभिः पादैः सिंहश्चारुसटान्वितः ॥ इत्येवमादिशब्दश्रवणात्तथाविधानेव मरालादीनवलोक्य तथा सत्यापयति यदा तदा तत्सङ्कलनमपि प्रत्यभिज्ञानमुक्तं, दर्शनस्मरणकारणत्वाविशेषात् ॥ परेषां तु तत्प्रमाणान्तरमेवोपपद्यते उपमानादौ तस्यान्तर्भावाभावात् । अथोहोऽवसरप्राप्त इत्याह—

**॥ उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः ॥ ११ ॥**

**॥ इदमस्मिन्सत्येव भवत्यसति न भवत्येवेति च ॥ १२ ॥**

उपलम्भः प्रमाणमात्रमत्र गृह्यते । यदि प्रत्यक्षमेवोपलम्भशब्देनोच्यते तदा साधनेष्वनुमेयेषु व्याप्तिज्ञानं न स्यात् ॥ अथ व्याप्तिः सर्वोपसंहारेण प्रतीयते, सा कथमतीन्द्रियस्य साधनस्यातीन्द्रियेण साध्येन भवेदिति । नैवं प्रत्यक्षविषयेष्विवानुमानविषयेष्वपि व्याप्तेरविरोधात् ॥ तज्ज्ञानस्याप्रत्यक्षत्वाभ्युपगमात् ॥ उदाहरणमाह–

**॥ यथाग्नावेव धूमस्तदभावे न भवत्येवेति च ॥ १३ ॥**

इदानीमनुमानं क्रमायातमिति तल्लक्षणमाह–

**साधनात्साध्यविज्ञानमनुमानम् ॥ १४ ॥**

साधनस्य लक्षणमाह–

**॥ साध्याविनाभावित्वेन निश्चितो हेतुः ॥ १५ ॥**

ननु त्रैरूप्यमेव हेतोर्लक्षणं, तस्मिन्सत्येव हेतोरसिद्धादिदोषपरिहारोपपत्तेः । तथाहि– पक्षधर्मत्वमसिद्धत्वव्यवच्छेदार्थमभिधीयते । सपक्षे सत्त्वं तु विरुद्धत्वापनोदार्थम् । विपक्षे चासत्त्वमेवानैकान्तिकव्युदासार्थमिति ॥ तदुक्तम् । "हेतोस्त्रिष्वपि रूपेषु निर्णयस्तेन वर्णितः । असिद्धविपरीतार्थव्यभिचारिविपक्षतः

इति ॥ १ ॥ तदयुक्तं--- अविनाभाव नियमनिश्चयादेव दोष-त्रयपरिहारोपपत्तेः । अविनाभावो ह्यन्यथानुपपन्नत्त्वं, तच्चासिद्धस्य न सम्भवत्येव । अन्यथानुपपन्नत्वमसिध्दस्य न सिध्यतीत्यभिधानात् ॥ नापि विरुद्धस्य तल्लक्षणत्वोपपत्तिर्विपरीतनिश्चिताविनाभाविनि यथोक्तसाध्याविनाभावनियमलक्षणस्यानुपपत्तेर्विरोधात् ॥ व्यभिचारिण्यपि न प्रकृतलक्षणावकाशः । तत एव ततोऽन्यथाऽनुपपत्तिरेव श्रेयसी । न त्रिरूपता । तस्यां सत्यामपि यथोक्तलक्षणाभावे हेतोर्गमकत्वादर्शनात् ॥ तथाहि– स श्यामस्तत्पुत्रत्वादितरतत्पुत्रवदित्यत्र त्रैरूप्यसम्भवेऽपि वें गमकत्वमुपलक्ष्यते । अथ विपक्षाद्व्यावृत्तिर्नियमवती तत्र न दृश्यते । ततो न गमकत्वमिति । तदपि मुग्धविलसितमेव। तस्या एवाविनाभावरूपत्वात् ॥ इतररूपसद्भावेऽपि तदभावे हेतोः स्वसाध्यसिद्धिम्प्रति गमकत्वानिष्टै सैव प्रधानं लक्षणमक्षूणमुपलक्षणीयमिति ॥ तत्सद्भावे चेतररूपद्वयनिरपेक्षतया गमकत्वोपपत्तेश्च । यथा सन्त्यद्वैतवादिनोऽपि प्रमाणानिष्टानिष्टसाधनदूषणाऽन्यथाऽनुपपत्तेः ॥ नचात्र पक्षधर्मत्वं सपक्षान्वयो वाऽस्ति । केवलमविनाभावमात्रेण गमकत्वप्रतीतेः ॥ यदप्यपरमुक्तं परैः पक्षधर्मताभावेऽपि काकस्य काष्ण्यार्द्धवलः प्रासाद इत्यस्यापि गमकत्वापत्तिरिति तदप्यनेन

निरस्तम् ॥ अन्यथानुपपत्तिबलेनैव पक्षधर्मस्यापि साधुत्त्वाभ्युपगमात् ॥ न चेह साऽस्ति । ततोऽविनाभाव एव हेतोः प्रधानं लक्षणमभ्युपगन्तव्यम् । तस्मिन्सत्यसति त्रिलक्षणत्त्वेऽपि हेतोर्गमकत्त्वदर्शनादिति न त्रैरूप्यं हेतुलक्षणमव्यापकत्वात् ॥ सर्वेषां क्षणिकत्त्वे साध्ये सत्त्वादेः साधनस्य सपक्षे सतोऽपि स्वयं सौगतैर्गमकत्वाभ्युपगमात् ॥ एतेन पञ्चलक्षणत्त्वमपि योगपरिकल्पितं न हेतोरुपपत्तिमियर्तीत्यभिहितं बोद्धव्यम् । पक्षधर्मत्वे सत्यन्वयव्यतिरेकावबाधितविषयत्त्वमसत्प्रतिपक्षत्त्वं चेति पन्चलक्षणानि, तेषामप्यविनाभावप्रपञ्चतैवाबाधितविषयस्याविनाभावायोगात् । सत्प्रतिपक्षस्येवेति साध्याभासविषयत्त्वेनासम्यग्घेतुत्वाच्च ॥ यथोक्तपक्षविषयत्वाभावात्तद्दोषेणैव दुष्टत्वात् । अतः स्थितं साध्याविनाभावित्वेन निश्चितो हेतुरिति ॥ इदानीमविनाभावभेदं दर्शयन्नाह—

॥ सहक्रमभावनियमोऽविनाभावः ॥ १६ ॥

तत्र सहभावनियमस्य विषयं दर्शयन्नाह—

॥ सहचारिणोर्व्याप्यव्यापकयोश्च सहभावः ॥ १७ ॥

सहचारिणो रूपरसयोर्व्याप्यव्यापकयोश्च वृक्षत्वशिंशपात्वयोरिति । सप्तम्या विषयो निर्दिष्टः ॥ क्रमभावनियमस्य विषयं दर्शयन्नाह—

**॥ पूर्वोत्तरचारिणोः कार्यकारणयोश्च क्रमभावः ॥ १८ ॥**

पूर्वोत्तरचारिणोः कृत्तिकोदयशकटोदययोः कार्यकारणयोश्च धूमधूमध्वजयोः क्रमभावः ॥ नन्वेवम्भूतस्याविनाभावस्य न प्रत्यक्षेण ग्रहणं, तस्य सन्निहितविषयत्वात् ॥ नाप्यनुमानेन, प्रकृतापरानुमानकल्पनायामितरेतराश्रयत्वानवस्थावतारात् ॥ आगमादेरपि भिन्नविषयत्वेन सुप्रसिद्धत्वान्न ततोऽपि तत्प्रतिपत्तिरित्याशंकायामाह–

**॥ तर्कात्तन्निर्णयः ॥ १९ ॥**

तर्काद्यथोक्तलक्षणादूहात्तन्निर्णय इति ॥ अथेदानीं साध्यलक्षणमाह–

**॥ इष्टमबाधितमसिद्धं साध्यम् ॥ २० ॥**

अत्रापरे दूषणमाचक्षते— आसनशयनभोजनयानानिधुवनादेरपीष्टत्वात्तदपि साध्यमनुषज्यत इति । तेऽप्यतिबालिशा अप्रस्तुतप्रलापित्वात् ॥ अत्र हि साधनमधिक्रियते । तेन साधनविषयत्वेनेप्सितमिष्टमुच्यते ॥ इदानीं स्वाभिहितसाध्यलक्षणस्य विशेषणानि सफलयन्नसिद्धविशेषणं समर्थयितुमाह—

**॥ सन्दिग्धविपर्यस्ताव्युत्पन्नानां साध्यत्वं यथा स्यादित्यसिद्धपदम् ॥ २१ ॥**

तत्र सन्दिग्धं स्थाणुर्वा पुरुषो वेत्यनवधारणेनोभयकोटिपरामर्शिसंशयाकलितं वस्तु उच्यते ॥ विपर्यस्तं तु विपरीतावभासिविपर्ययज्ञानविषयभूतं रजतादि ॥ अव्युत्पन्नं तु नामजातिसंख्यादिविशेषापरिज्ञानेनानिर्णीतविषयानध्यवसायग्राह्यम् ॥ एषां साध्यत्वप्रतिपादनार्थमसिद्धपदोपादानमित्यर्थः ॥ अधुनेष्टाबाधितविशेषणद्वयस्य साफल्यं दर्शयन्नाह—

**॥ अनिष्टाध्यक्षादिबाधितयोः साध्यत्वं माभूदितीष्टाबाधितवचनम् ॥ २२ ॥**

अनिष्टो मीमांसकस्यानित्यः शब्दः प्रत्यक्षादिबाधितश्चाश्रावणत्वादिः । आदिशब्देनानुमानागमलोकस्ववचनबाधितानां ग्रहणम् । तदुदाहरणं चाकिञ्चित्करस्य हेत्वाभासस्य निरूपणावसरे स्वयमेव ग्रन्थकारः प्रपञ्चयिष्यतीत्युपरम्यते ॥ तत्रासिद्धपदं प्रतिवाद्यपेक्षयैव, इष्टपदं तु वाद्यपेक्षयेति विशेषमुपदर्शयितुमाह—

**॥ न चासिद्धवदिष्टं प्रतिवादिनः ॥ २३ ॥**

अयमर्थः— न हि सर्वं सर्वापेक्षया विशेषणमपि तु किञ्चित्कमप्युद्दिश्य भवतीति । असिद्धवदिति व्यतिरेकमुखेनोदाहरणम् । यथा असिद्धं प्रतिवाद्यपेक्षया न तथेष्टमित्यर्थः ॥ कुत एतदित्याह—

**॥ प्रत्यायनाय हीच्छा वक्तुरेव ॥ २४ ॥**

इच्छायाः खलु विषयीकृतमिष्टमुच्यते। प्रत्यायनाय हीच्छा वक्तुरेवेति॥ तत्र साध्यं धर्मः किं वा तद्विशिष्टो धर्मीति प्रश्ने तद्भेदं दर्शयन्नाह–

॥ साध्यं धर्मः क्वचित्तद्विशिष्टो वा धर्मीति॥ २५॥

सोपस्काराणि वाक्यानि भवन्ति। ततोऽयमर्थो लभ्यते– व्याप्तिकालापेक्षया तु साध्यं धर्मः। क्वचित्प्रयोगकालापेक्षया तु तद्विशिष्टो धर्मी साध्यः॥ अस्यैव धर्मिणो नामान्तरमाह–

॥ पक्ष इति यावत्॥ २६॥

ननु धर्मधर्मिसमुदायः पक्ष इति पक्षस्वरूपस्य पुरातनैर्निरूपितत्वाद्धर्मिणस्तद्वचने कथं न राद्धान्तविरोध इति॥ नैवं– साध्यधर्माधारतया विशेषितस्य धर्मिणः पक्षत्ववचनेऽपि दोषानवकाशात्। रचनावैचित्र्यमात्रेण तात्पर्यस्यानिराकृतत्वात्सिद्धान्ताविरोधात्॥ अत्राह सौगतः भवतु नाम धर्मी पक्षव्यपदेशभाक् तथापि सविकल्पबुद्धौ परिवर्तमान एव न वास्तवः। सर्व एवानुमानानुमेयव्यवहारो बुध्यारूढेन धर्मधर्मिन्यायेन बहिःसदसत्वमपेक्षत इत्यभिधानादिति तन्निरासार्थमाह–

॥ प्रसिद्धो धर्मीति॥ २७॥

अयमर्थः– नेयं विकल्पबुद्धिर्बहिरन्तर्वा नासादितालम्बनभावा

धर्मिणं व्यवस्थापयति। तद्वास्तवत्वेन तद्गाधारसाध्यसाधनयोरपि वास्तवत्वानुपपत्तेस्तद्बुद्धेः पारंपर्येणापि वस्तुव्यवस्थानिबन्धनत्त्वायोगात्। ततो विकल्पेनान्येन वा व्यवस्थापितः पर्वतादिर्विषयभावं भजन्नेव धर्मितां प्रतिपद्यत इति स्थितं प्रसिद्धो धर्मीति। तत्प्रसिद्धिश्च क्वचिद्विकल्पतः क्वचित्प्रमाणतः क्वचिच्चोभयत इति नैकान्तेन विकल्पाधिरूढस्य प्रमाणप्रसिद्धस्य वा धर्मित्वम्॥ ननु धर्मिणो विकल्पात्प्रतिपत्तौ किं तव साध्यमित्याशङ्कायामाह—

॥ विकल्पसिद्धे तस्मिन्सत्तेतरे साध्ये॥ २८॥

तस्मिन्धर्मिणि विकल्पसिद्धे सत्ता च तदपेक्षयेतराऽसत्ता च ते द्वे अपि साध्ये सुनिर्णितासम्भवद्बाधकप्रमाणबलेन योग्यानुपलब्धिबलेन चेति शेषः॥ अत्रोदाहरणमाह––

॥ अस्ति सर्वज्ञो नास्ति खरविषाणमिति॥ २९॥

सुगमम्॥ ननु धर्मिण्यसिद्धसत्ताके भावाभावोभयधर्माणामसिद्धविरुद्धानैकान्तिकत्त्वादनुमानविषयत्त्वायोगात् कथं सत्तेतरयोः साध्यत्त्वम्?॥ तदुक्तम्— असिद्धो भावधर्मश्चेद्व्यभिचार्युभयाश्रितः। विरुद्धो धर्मो भावस्य सा सत्ता साध्यते कथम्। इति॥ तदयुक्तम्— मानसप्रत्यक्षे भावरूपस्यैव धर्मिणः प्रतिपन्नत्वात्॥ न च तत्सिद्धौ तत्सत्त्वस्यापि प्रतिपन्नत्वाद्व्यर्थमनुमानम्। तद्-

भ्युपेतमपि वैय्यात्याद्यदा परो न प्रतिपद्यते तदाऽनुमानस्य साफल्यात् ॥ न च मानसज्ञानाद्गगनकुसुमादेरपि सद्भावसम्भावनाऽतोऽतिप्रसङ्गः। तज्ज्ञानस्य बाधकप्रत्ययव्यपाकृतसत्ताकवस्तुविषयतया मानसप्रत्यक्षाभासत्त्वात् ॥ कथं तर्हि तुरगशृङ्गादेर्धर्मित्वमिति न चोद्यम्— धर्मिप्रयोगकाले बाधकप्रत्ययानुदयात्सत्त्वसम्भावनोपपत्तेः ॥ न च सर्वज्ञादौ साधकप्रमाणासत्त्वेन सत्त्वंप्रति संशीतिः सुनिश्चितासम्भवद्बाधकप्रमाणत्वेन सुखादाविव सत्त्वनिश्चयात्तत्र संशयायोगात् ॥ इदानीं प्रमाणोभयसिद्धे धर्मिणि किं साध्यमित्याशङ्कायामाह—

**॥ प्रमाणोभयसिद्धे तु साध्यधर्मविशिष्टता ॥ ३० ॥**

साध्ये इति शब्दः प्राक् द्विवचनान्तोऽप्यर्थवशादेकवचनान्ततया सम्बध्यते। प्रमाणं चोभयं च विकल्पप्रमाणद्वयं, ताभ्यां सिद्धे धर्मिणि साध्यधर्मविशिष्टता साध्या ॥ अयमर्थः— प्रमाणप्रतिपन्नमपि वस्तु विशिष्टधर्माधारतया विवादपदमारोहतीति साध्यतां नातिवर्तत इति ॥ एवमुभयसिद्धेऽपि योज्यम् ॥ प्रमाणोभयसिद्धं धर्मिद्वयं क्रमेण दर्शयन्नाह—

**॥ अग्निमानयं देशः परिणामी शब्द इति यथा ॥ ३१ ॥**

देशो हि प्रत्यक्षेण सिद्धः शब्दस्तूभयसिद्धः। नहि प्रत्यक्षेणा-

र्वाग्दर्शिभिरनियतदिग्देशकालावच्छिन्नाः सर्वे शब्दा निश्चेतुं पार्यन्ते । सर्वदर्शिनस्तु तन्निश्चयेऽपि तं प्रत्यनुमानानर्थक्यात् ॥ प्रयोगकालापेक्षया धर्मविशिष्टधर्मिणः साध्यत्त्वमभिधाय व्याप्तिकालापेक्षया साध्यनियमं दर्शयन्नाह—

॥ व्याप्तौ तु साध्यं धर्म एवेति ॥ ३२ ॥

सुगमम् ॥ धर्मिणोऽपि साध्यत्त्वे को दोष इत्यत्राह—

॥ अन्यथा तदघटनादिति ॥ ३३ ॥

उक्तविपर्ययेऽन्यथाशब्दः । धर्मिणः साध्यत्वे तदघटनात् व्याप्त्यघटनादिति हेतुः ॥ न हि धूमदर्शनात्सर्वत्र पर्वतोऽग्निमानिति व्याप्तिः शक्या कर्तुं प्रमाणविरोधात् ॥ नन्वनुमाने पक्षप्रयोगस्यासम्भवात् प्रसिद्धो धर्मीत्यादिवचनमयुक्तम् । तस्य सामर्थ्यलब्धत्वात् ॥ तथापि तद्वचने पुनरुक्ततामसङ्गात् । अर्थादापन्नस्यापि पुनर्वचनं पुनरुक्तमित्यभिधानादिति सौगतस्तत्राह—

॥ साध्यधर्माधारसन्देहापनोदाय गम्यमानस्यापि पक्षस्य वचनम् ॥ ३४ ॥

साध्यमेव धर्मस्तस्याधारस्तत्र सन्देहो महानसादिः पर्वतादिर्वेति । तस्यापनोदो व्यवच्छेदस्तदर्थं गम्यमानस्यापि साध्यसाधनयोर्व्याप्यव्यापकभावप्रदर्शनान्यथानुपपत्तेस्तदाधारस्य गम्यमान-

स्यापि पक्षस्य वचनं प्रयोगः ॥ अत्रोदाहरणमाह—

**साध्यधर्मिणि साधनधर्मावबोधनाय पक्षधर्मोपसंहारवत् ३५**

साध्येन विशिष्टो धर्मी पर्वतादिस्तत्र साधनधर्मावबोधनाय पक्षधर्मोपसंहारवत्। पक्षधर्मस्य हेतोरुपसंहार उपनयस्तद्वदिति ॥ अयमर्थः— साध्यव्याप्तसाधनप्रदर्शनेन तदाधारावगतावपि नियतधर्मिसम्बन्धिताप्रदर्शनार्थं यथोपनयस्तथा साध्यस्य विशिष्टधर्मिसम्बन्धितावबोधनाय पक्षवचनमपीति ॥ किञ्च हेतुप्रयोगेऽपि समर्थनमवश्यं वक्तव्यम्। असमर्थितस्य हेतुत्वायोगात् ॥ तथा च समर्थनोपन्यासादेव हेतोः सामर्थ्यसिद्धत्वाद्धेतुप्रयोगोऽनर्थकः स्यात्। हेतुप्रयोगाभावे कस्य समर्थनमिति चेत्-- पक्षप्रयोगाभावे क हेतुर्वर्त्ततामिति समानमेतत् ॥ तस्मात्कार्यस्वभावानुपलम्भभेदेन पक्षधर्मत्वादिभेदेन च त्रिधा हेतुमुक्त्वा समर्थयमानेन पक्षप्रयोगोऽप्यभ्युपगन्तव्य एवेति ॥ अमुमेवार्थमाह—

**॥ को वा त्रिधा हेतुमुक्त्वा समर्थयमानो न पक्षयति ॥३६॥**

को वा वादी प्रतिवादी चेत्यर्थः। किलार्थे वा शब्दः। युक्त्या पक्षप्रयोगस्यावश्यंभावे कः किल न पक्षयति? पक्षं न करोत्यपि तु करोत्येव ॥ किं कुर्वन्समर्थयमानः। किं कृत्वा हेतुमुक्त्वैव। न पुनरनुक्त्वेत्यर्थः। समर्थनं हि हेतोरसिद्धत्वादिदोषपरिहारेण स्व-

साध्यसाधनसामर्थ्यप्ररूपणप्रवणं वचनम्। तच्च हेतुप्रयोगोत्तरकालं परेणाङ्गीकृतमित्युक्त्वेति वचनम् ॥ ननु भवतु पक्षप्रयोगस्तथापि पक्षहेतुदृष्टान्तभेदेन त्र्यवयवमनुमानमिति सांख्यः। प्रतिज्ञाहेतूदाहरणोपनयभेदेन चतुरवयवमिति मीमांसकः। प्रतिज्ञाहेतूदाहरणोपनयनिगमनभेदात्पञ्चावयवमिति यौगः। तन्मतमपाकुर्वन्स्वमतसिद्धमवयवद्वयमेवोपदर्शयन्नाह--

॥ एतद्द्वयमेवानुमानाङ्गं नोदाहरणमिति ॥ ३७ ॥

एतयोः पक्षहेत्वोर्द्वयमेव नातिरिक्तमित्यर्थः। एवकारेणैवोदाहरणादिव्यवच्छेदे सिध्देऽपि परमतनिरासार्थं पुनर्नोदाहरणमित्युक्तम्। तध्दि किं साध्यप्रतिपत्त्यर्थमुतस्विध्देतोरविनाभावनियमार्थमाहोस्विद्व्याप्तिस्मरणार्थमिति विकल्पान् क्रमेण दूषयन्नाह---

॥ न हि तत्साध्यप्रतिपत्त्यङ्गं तत्र यथोक्तहेतोरेव व्यापारात् ॥

तदुदाहरणं साध्यप्रतिपत्तेरङ्गं कारणं नेति सम्बन्धः। तत्र साध्यप्रतिपत्तौ यथोक्तस्य साध्याविनाभावित्वेन निश्चितस्य हेतोर्व्यापारादिति ॥ द्वितीयविकल्पं शोधयन्नाह—

॥ तदविनाभावनिश्चयार्थं वा विपक्षे बाधकादेव तत्सिध्देः ॥

तदिति वर्तते। नेति च। तेनायमर्थः तदुदाहरणं तेन साध्येनाविनाभावनिश्चयार्थं वा न भवतीति। विपक्षे बाधकादेव

तत्सिद्धेरविनाभावनिश्चयसिद्धेः ॥ किञ्च व्यक्तिरूपं निदर्शनं तत्कथं साकल्येन व्याप्तिं गमयेत् । व्यक्त्यन्तरेषु व्याप्त्यर्थं पुनरुदाहरणान्तरं मृग्यम् । तस्यापि व्यक्तिरूपत्त्वेन सामान्येन व्याप्तेरवधारयितुमशक्यत्त्वादपरापरतदन्तरापेक्षायामनवस्था स्यात् ॥ एतदेवाह--

**॥ व्यक्तिरूपं च निदर्शनं सामान्येन तु व्याप्तिस्तत्रापि तद्विप्रतिपत्तावनवस्थानं स्यात् दृष्टान्तान्तरापेक्षणात् ॥४०॥**

तत्रापि उदाहरणेऽपि । तद्विप्रतिपत्तौ सामान्यव्याप्तिविप्रतिपत्तावित्यर्थः ॥ शेषं व्याख्यातम् ॥ तृतीयविकल्पे दूषणमाह--

**नापि व्याप्तिस्मरणार्थं तथाविधहेतुप्रयोगादेव तत्स्मृतेः ॥**

गृहीतसम्बन्धस्य हेतुप्रदर्शनेनैव व्याप्तिसिद्धिरगृहीतसम्बन्धस्य दृष्टान्तशतेनापि न तत्स्मरणमनुभूतविषयत्त्वात्स्मरणस्येति भावः ॥ तदेवमुदाहरणप्रयोगस्य साध्यार्थंप्रति नोपयोगित्वं प्रत्युत संशयहेतुत्वमेवेति दर्शयति

**॥ तत्परमभिधीयमानं साध्यधर्मिणि साध्यसाधने सन्देहयति ॥ ४२ ॥**

तदुदाहरणं परं केवलमभिधीयमानं साध्यधर्मिणि साध्यविशिष्टे धर्मिणि साध्यसाधने सन्देहयति सन्देहवती करोति। दृष्टान्तधर्मिणि

साध्यव्याप्तसाधनोपदर्शनेऽपि साध्यधर्मिणि तन्निर्णयस्य कर्तुमशक्यत्वादिति शेषः ॥ अमुमेवार्थं व्यतिरेकमुखेन समर्थयमानः प्राह–

॥ कुतोऽन्यथोपनयनिगमने ॥ ४३ ॥

अन्यथा संशयहेतुत्त्वाभावे कस्माद्धेतोरुपनयनिगमने प्रयुज्येते ॥ अपरः प्राह– उपनयनिगमनयोरप्यनुमानाङ्गत्वमेव, तदप्रयोगे निरवकरसाध्यसंवित्तेरयोगादिति । तन्निषेधार्थमाह—

॥ न च ते तदङ्गे । साध्यधर्मिणि हेतुसाध्ययोर्वचनादेवासंशयात् ॥ ४४ ॥

ते उपनयनिगमने अपि वक्ष्यमाणलक्षणे तस्यानुमानस्याङ्गे न भवतः । साध्यधर्मिणि हेतुसाध्ययोर्वचनादेवेत्येवकारेण दृष्टान्तादिकमन्तरेणेत्यर्थः ॥ किञ्चाभिधायापि दृष्टान्तादिकं समर्थनमवश्यं वक्तव्यमसमर्थितस्याहेतुत्वादिति तदेव वरं हेतुरूपमनुमानावयवो वाऽस्तु साध्यसिद्धौ तस्यैवोपयोगान्नोदाहरणादिकमेतदेवाह—

॥ समर्थनं वा वरं हेतुरूपमनुमानावयवो वाऽस्तु साध्ये तदुपयोगात् ॥ ४५ ॥

प्रथमो वाशब्द एवकारार्थे । द्वितीयस्तु पक्षान्तरसूचने । शेषं सुगमम् ॥ ननु दृष्टान्तादिकमन्तरेण मन्दधियामवबोधयितुमशक्यत्वात्कथं पक्षहेतुप्रयोगमात्रेण तेषां साध्यविप्रतिपत्तिरिति तत्राह—

**॥ बालव्युत्पत्त्यर्थं तत्त्रयोपगमे शास्त्र एवासौ न वादेऽनुपयोगादिति ॥ ४६ ॥**

बालानां अल्पप्रज्ञानां व्युत्पत्त्यर्थं तेषामुदाहरणादीनां त्रयोपगमे शास्त्र एवासौ तत्त्रयोपगमो न वादे नहि वादकाले शिष्या व्युत्पाद्याः । व्युत्पन्नानामेव तत्राधिकारादिति ॥ बालव्युत्पत्त्यर्थं तत्त्रयोपगम इत्यादिना शास्त्रेऽभ्युपगतमेवोदाहरणादित्रयमुपदर्शयति—

**॥ दृष्टान्तो द्वेधा । अन्वयव्यतिरेकभेदादिति ॥ ४७ ॥**

दृष्टावन्तौ साध्यसाधनलक्षणौ धर्मावन्वयमुखेन व्यतिरेकद्वारेण वा यत्र स दृष्टान्त इत्यन्वर्थसंज्ञाकरणात् । स द्वेधैवोपपद्यते ॥ तत्रान्वयदृष्टान्तं दर्शयन्नाह—

**॥ साध्यव्याप्तं साधनं यत्र प्रदर्श्यते सोऽन्वयदृष्टान्तः ॥ ४८**

साध्येन व्याप्तं नियतं साधनं हेतुर्यत्र दर्श्यते व्याप्तिपूर्वकतयेति भावः ॥ द्वितीयभेदमुपदर्शयति—

**॥ साध्याभावे साधनाभावो यत्र कथ्यते स व्यतिरेकदृष्टान्तः ॥ ४९ ॥**

असत्यसद्भावो व्यतिरेकः । तत्प्रधानो दृष्टन्तो व्यतिरेकदृष्टान्तः । साध्याभावे साधनस्याभाव एवेति सावधारणं द्रष्टव्यम् ॥ क्रमप्राप्तमुपनयस्वरूपं निरूपयति—

॥ हेतोरुपसंहार उपनयः ॥ ५० ॥

पक्षे इत्यध्याहारः । तेनायमर्थः– हेतोः पक्षधर्मतयोपसंहार उपनय इति ॥ निगमनस्वरूपमुपदर्शयति–

॥ प्रतिज्ञायास्तु निगमनमिति ॥ ५१ ॥

उपसंहार इति वर्त्तते । प्रतिज्ञाया उपसंहारः साध्यधर्मविशिष्टत्वेन प्रदर्शनं निगमनमित्यर्थः ॥ ननु शास्त्रे दृष्टान्तादयो वक्तव्या एवेति नियमानभ्युपगमात्कथं तत्रयमिह सूरिभिः प्रपञ्चितमिति न चोद्यम् । स्वयमनभ्युपगमेऽपि प्रतिपाद्यानुरोधेन जिनमतानुसारिभिः प्रयोगपरिपाट्याः प्रतिपन्नत्वात् । सा चाज्ञाततत्स्वरूपैः कर्तुं न शक्यत इति तत्स्वरूपमपि शास्त्रेऽभिधातव्यमेवेति ॥ तदेवं मतभेदेन द्वित्रिचतुःपञ्चावयवरूपमनुमानं द्विप्रकारमेवेति दर्शयन्नाह–

॥ तदनुमानं द्वेधा ॥ ५२ ॥

तद्द्वैविध्यमेवाह–

॥ स्वार्थपरार्थभेदादिति ॥ ५३ ॥

स्वपरविप्रतिपत्तिनिरासफलत्वाद्विविधमेवेति भावः ॥ स्वार्थानुमानभेदं दर्शयन्नाह–

॥ स्वार्थमुक्तलक्षणम् ॥ ५४ ॥

साधनात्साध्यविज्ञानमनुमानमिति प्रागुक्तं लक्षणं यस्य तत्त-थोक्तमित्यर्थः ॥ द्वितीयमनुमानभेदं दर्शयन्नाह---

॥ परार्थं तु तदर्थपरामर्शिवचनाज्जातमिति ॥ ५५ ॥

तस्य स्वार्थानुमानस्यार्थः साध्यसाधनलक्षणः। तं परामृशतीत्येवं शीलं तदर्थपरामार्शि। तच्च तद्वचनं च तस्माज्जातमुत्पन्नं विज्ञानं परार्थानुमानमिति ॥ ननु वचनात्मकं परार्थानुमानं प्रसिद्धं, तत्कथं तदर्थप्रतिपादकवचनजनितविज्ञानस्य परार्थानुमानत्वमभिदधता न संगृहीतमिति न वाच्यम्। अचेतनस्य साक्षात्प्रमितिहेतुत्वाभावेन निरुपचरितप्रमाणभावाभावात्। मुख्यानुमानहेतुत्वेन तस्योपचरितानुमानव्यपदेशो न वार्यत एव ॥ तदेवोपचरितं परार्थानुमानत्वं तद्वचनस्याचार्यः प्राह---

॥ तद्वचनमपि तद्धेतुत्वादिति ॥ ५६ ॥

उपचारो हि मुख्याभावे सति प्रयोजने निमित्ते च प्रवर्त्तते। तत्र वचनस्य परार्थानुमानत्वे निमित्तं तद्धेतुत्वम्। तस्य प्रतिपाद्यानुमानस्य हेतुस्तद्धेतुस्तस्य भावस्तत्त्वम्। तस्मान्निमित्तात्तद्वचनमपि परार्थानुमानप्रतिपादकवचनमपि परार्थानुमानमिति सम्बन्धः। कारणे कार्यस्योपचारात् ॥ अथवा तत्प्रतिपादकानुमानं हेतुर्यस्य तत्तद्धेतुस्तस्य भावस्तत्त्वं ततस्तद्वचनमपि तथेति सम्बन्धः ॥ अस्मि-

न्पक्षे कार्ये कारणस्योपचार इति शेषः ॥ वचनस्यानुमानत्वे च प्रयोजनमनुमानावयवाः प्रतिज्ञादय इति शास्त्रे व्यवहार एव ॥ ज्ञानात्मन्यनंशे तद्व्यवहारस्याशक्यकल्पनत्वात् ॥ तदेवं साधनात् साध्यविज्ञानमनुमानमित्यनुमानसामान्यलक्षणम् ॥ तदनुमानं द्वेधेत्यादिना तत्प्रकारं च सप्रपञ्चमभिधाय साधनमुक्तलक्षणापेक्षयैकमप्यतिसंक्षेपेण भिद्यमानं द्विविधमित्युपदर्शयति—

॥ स हेतुर्द्वेधोपलब्ध्यनुपलब्धिभेदादिति ॥ ५७ ॥

सुगममेतत् ॥ तत्रोपलब्धिर्विधिसाधिकैव । अनुपलब्धिः प्रतिषेधसाधिकैवेति ॥ परस्य नियमं विघटयन्नुपलब्धेरनुपलब्धेश्चाविशेषेण विधिप्रतिषेधसाधनत्वमाह——

॥ उपलब्धिर्विधिप्रतिषेधयोरनुपलब्धिश्चेति ॥ ५८ ॥

गतार्थमेतत् ॥ इदानीमुपलब्धेरपि संक्षेपेण विरुद्धाविरुद्धभेदात् द्वैविध्यमुपदर्शयन्नविरुद्धोपलब्धेर्विधौ साध्ये विस्तरतो भेदमाह—

॥ अविरुद्धोपलब्धिर्विधौ षोढा व्याप्यकार्यकारणपूर्वोत्तरसहचरभेदादिति ॥ ५९ ॥

पूर्वं च उत्तरं च सह चेति द्वंद्वः । पूर्वोत्तरसह इत्येतेभ्यश्चर इत्यनुकरणनिर्देशः ॥ द्वन्द्वात् श्रूयमाणश्चरशब्दः प्रत्येकमभिसम्बध्यते । तेनायमर्थः पूर्वचरोत्तरचरसहचरा इति । पश्चाद्व्याप्या-

दिभिः सह द्वन्द्वः ॥ अत्राह सौगतः— विधिसाधनं द्विविधमेव । स्वभावकार्यभेदात् । कारणस्य तु कार्याविनाभावाभावादलिङ्गत्वम् । नावश्यं कारणानि कार्यवन्ति भवन्तीति वचनात् ॥ अप्रतिबद्धसामर्थ्यस्य कार्यम्प्रति गमकत्वमित्यपि नोत्तरम् । सामर्थ्यस्यातीन्द्रियतया विद्यमानस्यापि निश्चेतुमशक्यत्वादिति ॥ तदसमीक्षिताभिधानमिति दर्शयितुमाह—

**॥ रसादेकसामग्र्यनुमानेन रूपानुमानमिच्छद्भिरिष्टमेव किञ्चित्कारणं हेतुर्यत्र सामर्थ्याप्रतिबन्धकारणान्तरावैकल्ये ६०**

आस्वाद्यमानाद्धि रसात्तज्जनिका सामग्र्यनुमीयते । ततो रूपानुमानं भवति । प्राक्तनो हि रूपक्षणः सजातीयं रूपक्षणान्तरलक्षणं कार्यं कुर्वन्नेव विजातीयं रसलक्षणं कार्यं करोतीति रूपानुमानमिच्छद्भिरिष्टमेव किञ्चित्कारणं हेतुः प्राक्तनस्य रूपलक्षणस्य सजातीयरूपक्षणान्तराव्यभिचारात् । अन्यथा रससमानकालरूपप्रतिपत्तेरयोगात् ॥ नह्यनुकूलमात्रमन्त्यक्षणप्राप्तं वा कारणं लिङ्गमिष्यते । येन मणिमन्त्रादिना सामर्थ्यप्रतिबन्धात्कारणान्तरवैकल्येन वा कार्यव्यभिचारित्वं स्यात् ॥ द्वितीयक्षणे कार्यप्रत्यक्षीकरणेनाऽनुमानानर्थक्यं वा । कार्याविनाभावितया निश्चितस्य विशिष्टकारणस्य छत्रादेर्लिङ्गत्वेनाङ्गीकरणात् ॥ यत्र सामर्थ्याप्रतिबन्धः कारणान्त-

रावैकल्यं निश्चीयते तस्यैव लिङ्गत्वं नान्यस्येति नोक्तदोषप्रसङ्गः ॥

इदानीं पूर्वोत्तरचरयोः स्वभावकार्यकरणेष्वनन्तर्भावाद्भेदान्तरत्वमेवेति दर्शयति—

॥ न च पूर्वोत्तरचारिणोस्तादात्म्यं तदुत्पत्तिर्वा कालव्यवधाने तदनुपलब्धेरिति ॥ ६१ ॥

तादात्म्यसम्बन्धे साध्यसाधनयोः स्वभावहेतावन्तर्भावः, तदुत्पत्तिसम्बन्धे च कार्ये कारणे वान्तर्भावो विभाव्यते । न च तदुभयसम्भवः कालव्यवधाने तदनुपलब्धेः । सहभाविनोरेव तादात्म्यसम्भवादनन्तरयोरेव पूर्वोत्तरक्षणयोर्हेतुफलभावस्य दृष्टत्वात् । व्यवहितयोस्तदघटनात् ॥ ननु कालव्यवधानेऽपि कार्यकारणभावो दृश्यत एव । यथा जाग्रत्प्रबुद्धदशाभाविप्रबोधयोर्मरणारिष्टयोर्वेति ॥ तत्परिहारार्थमाह—

॥ भाव्यतीतयोर्मरणजाग्रद्बोधयोरपि नारिष्टोद्बोधौ प्रति हेतुत्वम् ॥ ६२ ॥

सुगममेतत् ॥ अत्रैवोपपत्तिमाह—

॥ तद्व्यापाराश्रितं हि तद्भावभावित्वम् ॥ ६३ ॥

हिशब्दो यस्मादर्थे । यस्मात्तस्य कारणस्य भावे कार्यस्य भावित्वं तद्भावभावित्वं तच्च तद्व्यापाराश्रितं तस्मान्न प्रकृतयोः का-

र्यकारणभाव इत्यर्थः ॥ अयमर्थः– अन्वयव्यतिरेकसमधिगम्यो हि सर्वत्र कार्यकारणभावः । तौ च कार्यम्प्रति कारणव्यापारसव्यपेक्षावेवोपपद्येते कुलालस्येव कलशम्प्रति । न चातिव्यवहितेषु तद्व्यापाराश्रितत्त्वमिति ॥ सहचरस्याप्युक्तहेतुष्वनन्तर्भावं दर्शयति–

**॥ सहचारिणोरपि परस्परपरिहारेणावस्थानात्सहोत्पादाच्च**

हेत्वन्तरत्त्वमिति शेषः । अयमभिप्रायः परस्परपरिहारेणोपालम्भात्तादात्म्यासम्भवात्स्वभावहेतावनन्तर्भावः । सहोत्पादाच्च न कार्ये कारणे वेति ॥ न च समानसमयवर्तिनोः कार्यकारणभावः सव्येतरगोविषाणवत् । कार्यकारणयोः प्रतिनियमाभावप्रसङ्गाच्च ॥ तस्माद्धेत्वन्तरत्वमेवेति ॥ इदानीं व्याप्यहेतुं क्रमप्राप्तमुदाहरन्नुक्तान्वयव्यतिरेकपुरस्सरं प्रतिपाद्याशयवशात्प्रतिपादितप्रतिज्ञाद्यवयवपञ्चकं प्रदर्शयति–

**॥ परिणामी शब्दः कृतकत्त्वात् । य एवं स एवं दृष्टो, यथा घटः, कृतकश्चायं, तस्मात्परिणामीति, यस्तु न परिणामी स न कृतको दृष्टो यथा वन्ध्यास्तनन्धयः, कृतकश्चायं, तस्मात्परिणामीति ॥ ६५ ॥**

स्वोत्पत्तौ अपेक्षितव्यापारो हि भावः कृतक उच्यते । तच्च कृतकत्त्वं न कूटस्थनित्यपक्षे नापि क्षणिकपक्षे किन्तु परिणामित्त्वे

सत्येवेत्यग्रे वक्ष्यते ॥ कार्यहेतुमाह—

॥ अस्त्यत्र देहिनि बुद्धिर्व्याहारादेः ॥ ६६ ॥

कारणहेतुमाह—

॥ अस्त्यत्र च्छाया छत्रात् ॥ ६७ ॥

अथ पूर्वचरहेतुमाह—

॥ उदेष्यति शकटं कृत्तिकोदयात् ॥ ६८ ॥

मुहूर्तान्ते इति सम्बन्धः ॥ अथोत्तरचरः—

॥ उदगाद्भरणिः प्राक्तत एव ॥ ६९ ॥

अत्रापि मुहूर्तात्प्रागिति सम्बन्धनीयं, तत एव कृत्तिकोदयादेवेत्यर्थः ॥ सहचरलिङ्गमाह—

अस्त्यत्र मातुलिङ्गे रूपं रसात् ॥ ७० ॥

विरुद्धोपलब्धिमाह—

॥ विरुद्धतदुपलब्धिः प्रतिषेधे तथेति ॥ ७१ ॥

प्रतिषेधे साध्येऽप्रतिषेध्येन विरुद्धानां सम्बन्धिनस्ते व्याप्यादयस्तेषामुपलब्धय इत्यर्थः । तथेति षोढेति भावः ॥ तत्र साध्यविरुद्धव्याप्योपलब्धिमाह—

॥ नास्त्यत्र शीतस्पर्श औष्ण्यात् ॥ ७२ ॥

शीतस्पर्शप्रतिषेधेन हि विरुद्धोऽग्निस्तद्व्याप्यमौष्ण्यमिति ॥ वि-

रुद्धकार्योपलम्भमाह–

॥ नास्त्यत्र शीतस्पर्शो धूमात् ॥ ७३ ॥

अत्रापि प्रतिषेध्यस्य साध्यस्य शीतस्पर्शस्य विरुद्धोऽग्निस्तस्य कार्यं धूम इति ॥ विरुद्धकारणोपलब्धिमाह–

॥ नास्मिन् शरीरिणि सुखमस्ति हृदयशल्यात् ॥ ७४ ॥

सुखविरोधि दुःखं, तस्य कारणं हृदयशल्यमिति ॥ विरुद्धपूर्वचरमाह—

॥ नोदेष्यति मुहूर्तान्ते शकटं रेवत्युदयात् ॥ ७५ ॥

शकटोदयविरुद्धो ह्यश्विन्युदयस्तत्पूर्वचरो रेवत्युदय इति ॥ विरुद्धोत्तरचरं लिङ्गमाह—

॥ नोदगाद्भरणिर्मुहूर्तात्पूर्वं पुष्योदयात् ॥ ७६ ॥

भरण्युदयविरुद्धो हि पुनर्वसूदयस्तदुत्तरचरः पुष्योदय इति ॥ विरुद्धसहचरमाह–

॥ नास्त्यत्र भित्तौ परभागाभावोऽर्वाग्भागदर्शनादिति ७७

परभागाभावस्य विरुद्धस्तद्भावस्तत्सहचरोऽर्वाग्भाग इति ॥ अविरुद्धानुपलब्धिभेदमाह–

॥ अविरुद्धानुपलब्धिः प्रतिषेधे सप्तधा स्वभावव्यापककार्यकारणपूर्वोत्तरसहचरानुपलम्भभेदादिति ॥ ७८ ॥

स्वभावादिपदानां द्वन्द्वः तेषामनुपलम्भ इति पश्चाच्छष्ठीतत्पुरुषः समासः ॥ स्वभावानुपलम्भोदाहरणमाह—

॥ नास्त्यत्र भूतले घटोऽनुपलब्धेः ॥ ७९ ॥

अत्र पिशाचपरमाण्वादिभिर्व्यभिचारपरिहारार्थमुपलब्धिलक्षणप्राप्तत्वे सतीति विशेषणमुन्नेयम् ॥ व्यापकानुपलब्धिमाह—

॥ नास्त्यत्र शिंशपा वृक्षानुपलब्धेः ॥ ८० ॥

शिंशपात्वं हि वृक्षत्वेन व्याप्तम् । तदभावे तद्व्याप्यशिंशपाया अप्यभावः ॥ कार्यानुपलब्धिमाह—

॥ नास्त्यत्राप्रतिबद्धसामर्थ्योऽग्निर्धूमानुपलब्धेः ॥ ८१ ॥

अप्रतिबद्धसामर्थ्यं हि कार्यं प्रत्यनुपहतशक्तिकत्वमुच्यते । तदभावश्च कार्यानुपलम्भादिति ॥ कारणानुपलब्धिमाह—

॥ नास्त्यत्र धूमोऽनग्नेः ॥ ८२ ॥

पूर्वचरानुपलब्धिमाह—

॥ न भविष्यति मुहूर्तान्ते शकटं कृत्तिकोदयानुपलब्धेः ८३

उत्तरचरानुपलब्धिमाह—

॥ नोदगाद्भरणिर्मुहूर्तात्प्राक्तत एव ॥ ८४ ॥

तत एव कृत्तिकोदयानुपलब्धेरेवेत्यर्थः ॥ सहचरानुपलब्धिः प्राप्तकालेत्याह——

॥ नास्त्यत्र समतुलायामुन्नामो नामानुपलब्धेः ॥ ८५ ॥

विरुद्धकार्याद्यनुपलब्धिर्विधौ सम्भवतीत्याचक्षाणस्तद्भेदास्त्रय एवेति तानेव प्रदर्शयितुमाह—

॥ विरुद्धानुपलब्धिर्विधौ त्रेधा । विरुद्धकार्यकारणस्वभावानुपलब्धिभेदात् ॥ ८६ ॥

विरुद्धकार्याद्यनुपलब्धिर्विधौ सम्भवतीति विरुद्धकार्यकारणस्वभावानुपलब्धिरिति ॥ तत्र विरुद्धकार्यानुपलब्धिमाह -

॥ यथाऽस्मिन्प्राणिनि व्याधिविशेषोऽस्ति निरामयचेष्टानुपलब्धेरिति ॥ ८७ ॥

व्याधिविशेषस्य हि विरुद्धस्तदभावस्तस्य कार्यं निरामयचेष्टा तस्या अनुपलब्धिरिति ॥ विरुद्धकारणानुपलब्धिमाह--

॥ अस्त्यत्र देहिनि दुःखमिष्टसंयोगाभावात् ॥ ८८ ॥

दुःखविरोधि सुखं, तस्य कारणमिष्टसंयोगस्तदनुपलब्धिरिति ॥ विरुद्धस्वभावानुपलब्धिमाह—

—॥ एकान्तात्मकं वस्त्वेकान्तस्वरूपानुपलब्धेः ॥ ८९ ॥

अनेकान्तात्मकविरोधी नित्याद्येकान्तः । न पुनस्तद्विषयविज्ञानम् । तस्य मिथ्याज्ञानरूपतयोपलम्भसम्भवात् ॥ तस्य स्वरूपमसत्त्वाकारस्तस्यानुपलब्धिः ॥ ननु च व्यापकविरुद्धकार्यादीनां प-

म्परया विरोधिकार्यादिलिङ्गानां च बहुलमुपलम्भसम्भवात्तान्यपि किमिति नाचार्यैरुदाहृतानीत्याशङ्कायामाह—

॥ परम्परया सम्भवत्साधनमत्रैवान्तर्भावनीयम् ॥ ९० ॥

अत्रैवैतेषु कार्यादिष्वित्यर्थः ॥ तस्यैव साधनस्योपलक्षणार्थमुदाहरणद्वयं प्रदर्शयति—

॥ अभूदत्र चक्रे शिवकः स्थासात् ॥ ९१ ॥

एतच्च किं संज्ञिकं क्वान्तर्भवतीत्याशंकायामाह—

कार्यकार्यमविरुद्धकार्योपलब्धौ ॥ ९२ ॥

अन्तर्भावनीयमिति सम्बन्धः । शिवकस्य हि कार्यं छत्रकं, तस्य कार्यं स्थास इति ॥ दृष्टान्तद्वारेण द्वितीयहेतुमुदाहरति—

॥ नास्त्यत्र गुहायां मृगक्रीडनं मृगारिसंशब्दनात् । कारणविरुद्धकार्यं विरुद्धकार्योपलब्धौ यथेति ॥ ९३ ॥

मृगक्रीडनस्य हि कारणं मृगस्तस्य विरोधी मृगारिस्तस्य कार्यं तच्छब्दनमिति । इदं यथा विरुद्धकार्योपलब्धावन्तर्भवति तथा प्रकृतमपीत्यर्थः ॥ बालव्युत्पत्त्यर्थं पञ्चावयवप्रयोग इत्युक्तं व्युत्पन्नंप्रति कथं प्रयोगनियम इति शङ्कायामाह—

॥ व्युत्पन्नप्रयोगस्तु तथोपपत्त्याऽन्यथानुपपत्त्यैव वा ॥९४॥

व्युत्पन्नस्य व्युत्पन्नाय वा प्रयोगः क्रियते इति शेषः । तथो-

पपत्त्या तथा साध्ये सत्येवोपपत्तिस्तया अन्यथानुपपत्त्यैव वा अन्यथा साध्याभावेऽनुपपत्तिस्तया ॥ तामेवानुमानमुद्रामुन्मुद्रयति–

॥ अग्निमानयं देशस्तथैव धूमवत्त्वोपपत्ते-
र्धूमवत्त्वान्यथानुपपत्तेर्वेति ॥ ९५ ॥

ननु तदतिरिक्तदृष्टान्तादेरपि व्याप्तिप्रतिपत्तावुपयोगित्वात् । व्युत्पन्नापेक्षया कथं तदप्रयोग इत्याह–

॥ हेतुप्रयोगो हि यथाव्याप्तिग्रहणं विधीयते
सा च तावन्मात्रेण व्युत्पन्नैरवधार्यते इति ॥ ९६ ॥

हिशब्दो यस्मादर्थे, यस्माद्यथाव्याप्तिग्रहणं व्याप्तिग्रहणानतिक्रमेणैव हेतुप्रयोगो विधीयते । सा च तावन्मात्रेण व्युत्पन्नैस्तथोपपत्त्याऽन्यथानुपपत्त्या वाऽवधार्यते दृष्टान्तादिकमन्तरेणैवेत्यर्थः ॥ यथा दृष्टान्तादेर्व्याप्तिप्रतिपत्तिम्प्रत्यनङ्गत्वं तथा प्राक् प्रपञ्चितमिति नेह पुनः प्रतन्यते ॥ नापि दृष्टान्तादिप्रयोगः साध्यसिध्यर्थं फलवानित्याह–

॥ तावता च साध्यसिद्धिः ॥ ९७ ॥

चकार एवकारार्थे । निश्चितविपक्षासम्भवहेतुप्रयोगमात्रेणैव साध्यसिद्धिरित्यर्थः ॥ तेन पक्षप्रयोगोऽपि सफल इति दर्शयन्नाह–

॥ तेन पक्षस्तदाधारसूचनायोक्तः ॥ ९८ ॥

यतस्तथोपपत्त्यन्यथानुपपत्तिप्रयोगमात्रेण व्याप्तिप्रतिपत्तिस्तेन हेतुना पक्षस्तदाधारसूचनाय साध्यव्याप्तसाधनाधारसूचनायोक्तः ॥ ततो यदुक्तं परेण— तद्भावहेतुभावौ हि दृष्टान्ते तदवेदिनः ॥ ख्याप्येते विदुषां वाच्यो हेतुरेव हि केवलः ॥ १ ॥ इति तन्निरस्तम् ॥ व्युत्पन्नं प्रति यथोक्तहेतुप्रयोगोऽपि पक्षप्रयोगाभावे साधनस्य नियताधारतानवधारणात् ॥ अथानुमानस्वरूपं प्रतिपाद्येदानीं क्रमप्राप्तमागमस्वरूपं निरूपयितुमाह—

॥ आप्तवचनादिनिबन्धनमर्थज्ञानमागमः ॥ ९९ ॥

यो यत्रावञ्चकः स तत्राप्तः । आप्तस्य वचनम् । आदिशब्देनांगुल्यादिसंज्ञापरिग्रहः । आप्तवचनमादिर्यस्य तत्तथोक्तं तन्निबन्धनं यस्यार्थज्ञानस्येति ॥ आप्तशब्दोपादानादपौरुषेयत्वव्यवच्छेदः । अर्थज्ञानमित्यनेनान्यापोहज्ञानस्याभिप्रायसूचनस्य च निरासः ॥ नन्वसम्भवीदं लक्षणं, शब्दस्य नित्यत्वेनापौरुषेयत्वादाप्तप्रणीतत्वायोगात् । तन्नित्यत्वं च तदवयवानां वर्णानां व्यापकत्वान्नित्यत्वाच्च ॥ न च तद्व्यापकत्वमसिद्धम् । एकत्र प्रयुक्तस्य गकारादेः प्रत्यभिज्ञया देशान्तरेऽपि ग्रहणात् ॥ स एवायं गकार इति नित्यत्वमपि तयैवावसीयते । कालान्तरेऽपि तस्यैव गकारादेर्निश्चयात् ॥ इतो वा नित्यत्वं शब्दस्य सङ्केतान्यथानुपपत्तेरिति । तथाहि गृहीतसङ्के-

तस्य शब्दस्य प्रध्वंसे सत्यगृहीतसंकेतः शब्द इदानीमन्य एवोपलभ्यते इति तत्कथमर्थप्रत्ययः स्यात्? । न चासौ न भवतीति स एवायं शब्द इति प्रत्यभिज्ञानस्यात्रापि सुलभत्वाच्च ॥ न च वर्णानां शब्दस्य वा नित्यत्वे सर्वैः सर्वदा श्रवणप्रसङ्गः । सर्वदा तदभिव्यक्तेरसम्भवात् । तदसम्भवश्चाभिव्यञ्जकवायूनां प्रतिनियतत्वात् ॥ न च तेषामनुपपन्नत्वम् । प्रमाणप्रतिपन्नत्वात् ॥ तथाहि—वक्तृमुखनिकटदेशवर्तिभिः स्पर्शनेनाध्यक्षेण व्यञ्जका वायवो गृह्यन्ते । दूरदेशस्थितेन मुखसमीपस्थिततूलचलनादनुमीयन्ते । श्रोतृश्रोत्रदेशे शब्दश्रवणान्यथानुपपत्तेरर्थापत्त्यापि निश्चीयन्ते ॥ किञ्चोत्पत्तिपक्षेऽपि समानोऽयं दोषः । तथाहि— वाय्वाकाशसंयोगादसमवायिकारणादाकाशाच्च समवायिकारणाद्दिग्देशाद्यविभागेनोत्पद्यमानोऽयं शब्दो न सर्वैरनुभूयते । अपि तु नियतदिग्देशस्थैरेव तथाऽभिव्यज्यमानोऽपि ॥ नाप्यभिव्यक्तिसांकर्यमुभयत्रापि समानत्वादेव । तथाहि— अन्यैस्ताल्वादिसंयोगैर्यथान्यो वर्णो न क्रियते तथा ध्वन्यन्तरसारिभिस्ताल्वादिभिरन्यो ध्वनिर्नारभ्यते इत्युत्पत्त्यभिव्यक्त्योः समानत्वेनैकत्रैव पर्यनुयोगावसर इति सर्वं सुस्थम् ॥ माभूद्वर्णानां तदात्मकस्य वा शब्दस्य कौटस्थानित्यत्वम् । तथाप्यनादिपरम्परायातत्वेन वेदस्य नित्यत्वात्प्रकृतलक्षणस्याव्यापकत्वम् ॥ न च प्र-

बाहनित्यत्वमप्रमाणकमेवास्येति युक्तं वक्तुम् ॥ अधुना तत्कर्तुरनुपलम्भादतीतानागतयोरपि कालयोस्तदनुमापकस्य लिङ्गस्याभावात्तदभावोऽपि सर्वदाप्यतीन्द्रियसाध्यसाधनसम्बन्धस्येन्द्रियग्राह्यत्वायोगात् ॥ प्रत्यक्षप्रतिपन्नमेव हि लिङ्गम्। अनुमानं हि गृहीतसम्बन्धस्यैकदेशसन्दर्शनादसन्निकृष्टेऽर्थे बुद्धिरित्यभिधानात् ॥ नाप्यर्थापत्तेरतत्सिद्धिः। अन्यथाभूतस्यार्थस्याभावादुपमानोपमेययोरप्रत्यक्षत्वाच्च नाप्युपमानं साधकम् ॥ केवलमभावप्रमाणमेवावशिष्यते तच्च तदभावसाधकमिति ॥ न च पुरुषसद्भाववदस्यापि दुःसाध्यत्वात्संशयापत्तिस्तदभावसाधकप्रमाणानां सुलभत्वात् ॥ अधुना हि तदभावप्रत्यक्षमेवातीतानागतयोः कालयोरनुमानं तदभावसाधकमिति ॥ तथा च– अतीतानागतौ कालौ वेदकारविवर्जितौ ॥ कालशब्दाभिधेयत्वादिदानीन्तनकालवत् ॥ १ ॥ वेदस्याध्ययनं सर्वं तदध्ययनपूर्वकम् ॥ वेदाध्ययनवाच्यत्वादधुनाध्ययनं तथेति" ॥ २ ॥ तथा अपौरुषेयो वेदः अनवच्छिन्नसम्प्रदायत्वे सत्यस्मर्यमाणकर्तृकत्वादाकाशवत् ॥ अर्थापत्तिरपि प्रामाण्यलक्षणस्यार्थस्यानन्यथाभूतस्य दर्शनात्तदभावे निश्चीयते ॥ धर्माद्यतीन्द्रियार्थविषयस्य वेदस्यार्वाग्दर्शिभिः कर्तुमशक्यत्वात्। अतीन्द्रियार्थदर्शिनश्चाभावात्प्रामाण्यमपौरुषेयतामेव कल्पयतीति ॥ अत्र प्रतिविधीयते—

यत्तावदुक्तं वर्णानां व्यापित्वे नित्यत्वे च प्रत्यभिज्ञा प्रमाणमिति, तदसत् । प्रत्यभिज्ञायास्तत्र प्रमाणत्वायोगात् ॥ देशान्तरेऽपि तस्यैव वर्णस्य सत्त्वे खण्डशः प्रतिपत्तिः स्यात् । नहि सर्वत्र व्याप्त्या वर्तमानस्यैकस्मिन्प्रदेशे सामस्त्येन ग्रहणमुपपत्तियुक्तम् । अव्यापकत्वप्रसङ्गात् ॥ घटादेरपि व्यापकत्वप्रसङ्गः । शक्यं हि वक्तुमेवं घटः सर्वगतश्चक्षुरादिसन्निधानादनेकत्र देशे प्रतीयत इति ॥ ननु घटोत्पादकस्य मृत्पिण्डादेरनेकस्योपलम्भादनेकत्वमेव । तथा महदणुपरिमाणसम्भवाच्चेति ॥ तच्च वर्णेष्वपि समानम् । तत्रापि प्रतिनियततात्वादिकारणकलापस्य तीव्रादिधर्मभेदस्य च सम्भवाविरोधात् । ताल्वादीनां व्यञ्जकत्वमत्रैव निषेत्स्यत इत्यास्तां तावदेतत् ॥ अथ व्यापित्वेऽपि सर्वत्र सर्वात्मना वृत्तिमत्वान्न दोषोऽयमिति चेन्न । तथा सति सर्वथैकत्वविरोधात् । नहि देशभेदेन युगपत्सर्वात्मना प्रतीयमानस्यैकत्वमुपपन्नं प्रमाणविरोधात् ॥ तथाच प्रयोगः– प्रत्येकं गकारादिवर्णोऽनेक एव युगपद्भिन्नदेशतया तथैव सर्वात्मनोपलभ्यमानत्वात घटादिवत् ॥ न सामान्येन व्यभिचारः । तस्यापि सदृशपरिणामात्मकस्यानेकत्वात् । नापि पर्वताद्यनेकप्रदेशस्थतया युगपदनेकदेशस्थितपुरुषपरिदृश्यमानेन चन्द्रार्कादिना व्यभिचारः । तस्यातिदविष्ठतयैकदेशस्थितस्यापि भ्रान्ति-

वशादनेकदेशस्थत्वेन प्रतीतेः ॥ न चाभ्रान्तस्य भ्रान्तेन व्यभिचारकल्पना युक्तेति । नापि जलपात्रप्रतिबिम्बेन । तस्यापि चन्द्रार्कादिसन्निधिमपेक्ष्य तथापरिणममानस्यानेकत्वात् । तस्मादनेकप्रदेशे युगपत्सर्वात्मनोपलभ्यमानविषयस्यैकस्यासम्भाव्यमानत्त्वात्तत्र प्रवर्त्तमानं प्रत्यभिज्ञानं न प्रमाणमिति स्थितम् ॥ तथा नित्यत्वमपि न प्रत्यभिज्ञानेन निश्चीयत इति । नित्यत्वं हि एकस्यानेकक्षणव्यापित्त्वं । तच्चान्तराले सत्तानुपलम्भेन न शक्यते निश्चेतुम् । न च प्रत्यभिज्ञानबलेनैवान्तराले सत्तासम्भवः । तस्य सादृश्यादपि सम्भवाविरोधात् ॥ न च घटादावप्येवं प्रसङ्गः । तस्योत्पत्तावपरापरमृत्पिण्डान्तरलक्षणस्य कारणस्यासम्भाव्यमानत्वेनान्तराले सत्तायाः साधयितुं शक्यत्वात् । अत्र तु कारणानामपूर्वाणां व्यापारसम्भावनातो नान्तराले सत्तासम्भव इति ॥ यच्चान्यदुक्तं संकेतान्यथानुपपत्तेः शब्दस्य नित्यत्वमिति । इदमप्यनात्मज्ञभाषितमेव । अनित्येऽपि योजयितुं शक्यत्वात् ॥ तथा हि गृहीतसंकेतस्य दण्डस्य प्रध्वंसे सत्यगृहीतसंकेत इदानीमन्य एव दण्डः समुपलभ्यत इति दण्डीति न स्यात् । तथा धूमस्यापि गृहीतव्याप्तिकस्य नाशे अन्यधूमदर्शनाद्वह्निविज्ञानाभावश्च ॥ अथ सादृश्यात्तथाप्रतीतेर्न दोष इति चेदत्रापि सादृश्यवशादर्थप्रत्यये को दोषः ? । येन नि-

त्यस्त्वेऽत्र दुरभिनिवेश आश्रीयते । तथा कल्पनायामन्तराले सत्त्वमेप्यदृष्टं, न कल्पितं स्यादिति ॥ यच्चान्यदभिहितं व्यञ्जकानां प्रतिनियतत्वान्न युगपत् श्रुतिरिति तदप्यशिक्षितलक्षितम् । समानेन्द्रियग्राह्येषु समानधर्मसु समानदेशेषु विषयिविषयेषु नियमायोगात् ॥ तथाहि– श्रोत्रं समानदेशसमानेन्द्रियग्राह्यसमानधर्मापन्नानामर्थानां ग्रहणाय प्रतिनियतसंस्कारकसंस्कार्यं न भवति । इन्द्रियत्वात् चक्षुर्वत् ॥ शब्दा वा प्रतिनियतसंस्कारकसंस्कार्या न भवन्ति । समानदेशसमानेन्द्रियग्राह्यसमानधर्मापन्नत्वे सति युगपदिन्द्रियसम्बद्धत्वात् । घटादिवत् ॥ उपपत्तिपक्षेऽप्ययं दोषः समान इति न वाच्यं मृत्पिण्डदीपदृष्टान्ताभ्यां कारकव्यञ्जकपक्षयोर्विशेषसिद्धेरित्यलमतिजल्पितेन ॥ यच्चान्यत्प्रवाहानित्यत्वेन वेदस्यापौरुषेयत्वमिति तत्र किं शब्दमात्रस्यानादिनित्यत्वमुत विशिष्टानामिति? आद्यपक्षे य एव शब्दा लौकिकास्त एव वैदिका इत्यल्पमिदमभिधीयते वेद एवापौरुषेय इति । किन्तु सर्वेषामपि शास्त्राणामपौरुषेयतेति ॥ अथ विशिष्टानुपूर्विका एव शब्दा अनादित्वेनाभिधीयन्ते तेषामवगतार्थानामनवगतार्थानां वा अनादिता स्यात्? यदि तावदुत्तरः पक्षस्तदाऽज्ञानलक्षणमप्रामाण्यमनुषज्यते ॥ अथ

---

१ उत्पत्तिपक्षे, इत्यपि पाठभेदः ॥

आद्यः पक्ष आश्रीयते तद्व्याख्यातारः किञ्चिज्ज्ञा भवेयुः सर्वज्ञा वा? प्रथमपक्षे दुरधिगमसम्बन्धानामन्यथाप्यर्थस्य कल्पयितुं शक्यत्वात् मिथ्यात्वलक्षणमप्रामाण्यं स्यात्। तदुक्तम्— अयमर्थो नायमर्थ इति शब्दा वदन्ति न। कल्प्योऽयमर्थः पुरुषैस्ते च रागादिविप्लुताः ॥ १ ॥ किञ्च किञ्चिज्ज्ञव्याख्यातार्थाविशेषात् अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यस्य खादेच्छ्वमांसमित्यपि वाक्यार्थः किं न स्यात् संशयलक्षणमप्रामाण्यं वा ॥ अथ सर्वविद्विदितार्थ एव वेदोऽऽनादिपरंपराऽयात इति चेत्। हन्त धर्मे चोदनैव प्रमाणमिति हतमेतत् ॥ अतीन्द्रियार्थप्रत्यक्षीकरणसमर्थस्य पुरुषस्य सद्भावे च तद्वचनस्यापि चोदनावत्तदवबोधकत्वेन प्रामाण्याद्वेदस्य पुरुषाभावसिद्धेस्तत्प्रतिबन्धकं स्यात् ॥ अथ तद्व्याख्यातॄणां किञ्चिज्ज्ञत्वेऽपि यथार्थव्याख्यानपरम्परया अनवच्छिन्नसन्तानत्वेन सत्यार्थ एव वेदोऽवसीयत इति चेन्न। किंचिज्ज्ञानामतीन्द्रियार्थेषु निःसंशयव्याख्यानायोगादन्धेनाकृष्यमाणस्यान्धस्यानिष्टदेशपरिहारेणाभिमतपथप्रापणानुपपत्तेः ॥ किञ्चानादिव्याख्यानपरम्परागतत्त्वेऽपि वेदार्थस्य गृहीतविस्मृतसम्बन्धवचनाकौशलदुष्टाभिप्रायतया व्याख्यानस्यान्यथैव करणादविसंवादायोगादप्रामाण्यमेव स्यात्। दृश्यन्ते ह्यधुनातना अपि ज्योतिःशास्त्रादिषु रहस्यं यथार्थमवयन्तोऽपि दुरभि-

संधेरन्यथा व्याचक्षाणाः। केचिज्जानन्तोऽपि वचनाकौशलादन्यथोपदिशन्तः। केचिद्विस्मृतसम्बन्धा अयाथातथ्यमभिदधाना इति॥ कथमन्यथा भावनाविधिनियोगवाक्यार्थप्रतिपत्तिर्वेदे स्यान्मनुयाज्ञवल्क्यादीनां श्रुत्यर्थानुसारिस्मृतिनिरूपणायां वा। तस्मादनादिप्रवाहपतितत्वेऽपि वेदस्यायथार्थत्वमेव स्यादिति स्थितम्॥ यच्चोक्तमतीतानागतावित्यादि तदपि स्वमतनिर्मूलनहेतुत्त्वेन विपरीतसाधनात्तदाभासमेवेति॥ तथाहि— "अतीतानागतौ कालौ वेदार्थज्ञविवर्जितौ॥ कालशब्दाभिधेयत्त्वादधुनातनकालवदिति"॥ १॥ किञ्च कालशब्दाभिधेयत्त्वमतीतानागतयोः कालयोर्ग्रहणे सति भवति। तद्ग्रहणं च नाध्यक्षतस्तयोरतीन्द्रियत्वात्॥ अनुमानतस्तद्ग्रहणेऽपि न साध्येन सम्बन्धस्तयोर्निश्चेतुं पार्यते। प्रत्यक्षगृहीतस्यैव तत्सम्बन्धाभ्युपगमात्॥ न च कालाख्यं द्रव्यं मीमांसकस्यास्ति॥ प्रसङ्गसाधनाददोष इति चेन्न। परम्प्रति साध्यसाधनयोर्व्याप्यव्यापकभावाभावादिदानीमपि देशान्तरे वेदकारस्याष्टकादेः सौगतादिभिरभ्युपगमात्॥ यदप्यपरं वेदाध्ययनमित्यादि तदपि विपक्षेऽपि समानम्— "भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकम्। तदध्ययनवाच्यत्त्वादधुनाध्ययनं यथेति॥ १॥ यच्चान्यदुक्तम्— अनवच्छिन्नसम्प्रदायत्त्वे सत्यस्मर्यमाणकर्तृत्वादिति। तत्र जीर्णकूपारा-

मादिभिर्व्यभिचारनिवृत्त्यर्थमनवच्छिन्नसम्प्रदायत्वविशेषणेपि विशेष्यस्यास्मर्यमाणकर्तृकत्वस्य विचार्यमाणस्यायोगादसाधनत्वम् ॥ कर्तुरस्मरणं हि वादिनः प्रतिवादिनश्च सर्वस्य वा? वादिनश्चेदनुपलब्धेरभावाद्वा? । आद्ये पक्षे पिटकत्रयेऽपि स्यादनुपलब्धेरविशेषात् ॥ तत्र परैः कर्तुरङ्गीकरणान्नो चेत् । अत एवात्रापि न तदस्तु । अभावादिति चेदस्मात्तदभावसिद्धावितरेतराऽऽश्रयत्वम् । सिद्धे हि तदभावे तन्निबन्धनं तदस्मरणमस्माच्च तदभाव इति ॥ प्रामाण्यान्यथानुपपत्तेस्तदभावान्नेतरेतराश्रयत्वमिति चेन्न । प्रामाण्येनाप्रामाण्यकारणस्यैव पुरुषविशेषस्य निराकरणात् पुरुषमात्रस्यानिराकृतेः ॥ अथातीन्द्रियार्थदर्शिनोऽभावादन्यस्य च प्रामाण्यकारणत्वानुपपत्तेः सिद्ध एव सर्वथा पुरुषाभाव इति चेत् कुतः सर्वज्ञाभावो विभावितः? । प्रामाण्यान्यथानुपपत्तेरिति चेदितरेतराश्रयत्वम् । कर्तुरस्मरणादिति चेच्चक्रकप्रसङ्गः । अभावप्रमाणादिति चेन्न । तत्साधकस्यानुमानस्य प्राक्प्रतिपादितत्वादभावप्रमाणोत्थानायोगात् प्रमाणपञ्चकाभावेऽभावप्रमाणप्रवृत्तेः— 'प्रमाणपञ्चकं यत्र वस्तुरूपेण जायते । वस्तुसत्तावबोधार्थं तत्राभावप्रमाणतेति' परैरभिधानात् । ततो न वादिनः कर्तुरस्मरणमुपपन्नम् ॥ नापि प्रतिवादिनोऽसिद्धेः । तत्र हि प्रतिवादी स्मरत्येव कर्तारमिति ॥ नापि

सर्वस्य, वादिनो वेदकर्तुरस्मरणेऽपि प्रतिवादिनः स्मरणात् ॥ ननु प्रतिवादिना वेदेऽष्टकादयो बहवः कर्त्तारः स्मर्यन्तेऽतस्तत्स्मरणस्य विवादविषयस्याप्रामाण्याद्भवेदेव सर्वस्य कर्तुरस्मरणमिति चेत् न । कर्तृविशेषविषय एवासौ विवादो न कर्तृसामान्ये ॥ अतः सर्वस्य कर्तुरस्मरणमप्यसिद्धम् । सर्वात्मज्ञानविज्ञानरहितो वा कथं सर्वस्य कर्तुरस्मरणमवैति । तस्मादपौरुषेयत्वस्य वेदे व्यवस्थापयितुमशक्यत्वान्न तल्लक्षणस्याव्यापकत्वमसम्भावितत्वं वा सम्भवति ॥ पौरुषेयत्त्वे पुनः प्रमाणानि बहूनि सन्त्येव सजन्ममरणर्षिगोत्रचरणादिनामश्रुतेरनेकपदसंहतिप्रतिनियमसंदर्शनात्फलार्थिपुरुषप्रवृत्तिनिवृत्तिहेत्वात्मनां श्रुतेश्च मनुसूत्रवत् पुरुषकर्तृकैव श्रुतिरिति वचनात् ॥ अपौरुषेयत्त्वेऽपि वा न प्रामाण्यं वेदस्योपपद्यते तद्धेतूनां गुणानामभावात् ॥ ननु न गुणकृतमेव प्रामाण्यं किन्तु दोषाभावप्रकारेणापि, स च दोषाश्रयपुरुषाभावेऽपि निश्चीयते न गुणसद्भाव एवेति । तथाचोक्तम्– शब्दे दोषोद्भवस्तावद्वक्त्रधीन इति स्थितम् । तदभावः क्वचित्तावद्गुणवद्वक्तृकत्वतः ॥ १ ॥ तद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसम्भवात् । यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥ २ ॥ इति ॥ तदप्ययुक्तम् । पराभिप्रायापरिज्ञानात् ॥ नास्माभिर्वक्तुरभावे वेदस्य प्रामाण्याभावः समुद्भाव्यते । किं तु त-

द्वचाख्यातृणामतीन्द्रियार्थदर्शनाद्गुणाभावे । ततो दोषाणामनपोदितत्वान्न प्रामाण्यनिश्चय इति । ततोऽपौरुषेयत्वेऽपि वेदस्य प्रामाण्यनिश्चयायोगान्नानेन लक्षणस्याव्यापित्वमसम्भवित्वं वेत्यलमतिजल्पितेन ॥ ननु शब्दार्थयोः सम्बन्धाभावादन्यापोहमात्राभिधायित्वादाप्तप्रणीतादपि शब्दात् कथं वस्तुभूतार्थावगम इत्यत्राह—

**सहजयोग्यतासङ्केतवशाद्धि शब्दादयो वस्तुप्रतिपत्तिहेतवः॥१००॥**

सहजा स्वभावभूता योग्यता शब्दार्थयोर्वाच्यवाचकशक्तिः तस्यां सङ्केतस्तद्वशाद्धि स्फुटं शब्दादयः प्रागुक्ता वस्तुप्रतिपत्तिहेतव इति ॥ उदाहरणमाह—

**॥ यथा मेर्वादयः सन्ति ॥ १०१ ॥**

ननु य एव शब्दाः सत्यर्थे दृष्टास्त एवार्थाभावेऽपि दृश्यन्ते तत्कथमर्थाभिधायकत्वमिति । तदप्ययुक्तम्— अनर्थकेभ्यः शब्देभ्योऽर्थवतामन्यत्वात् ॥ न चान्यस्य व्यभिचारेऽन्यस्यासौ युक्तोऽतिप्रसङ्गात् ॥ अन्यथा गोपालघटिकान्तर्गतस्य धूमस्य पावकस्य व्यभिचारे पर्वतादिधूमस्यापि तत्प्रसङ्गात् ॥ "यत्नतः परीक्षितं कार्यं कारणं नातिवर्तते" इत्यन्यत्रापि समानम् । सुपरीक्षितो हि शब्दोऽर्थं न व्यभिचरतीति ॥ तथा चान्यापोहस्य शब्दार्थत्वकल्पनं प्रयासमात्रमेव ॥ न चान्यापोहः शब्दार्थो व्यवतिष्ठते प्रती-

तिविरोधात् ॥ न हि गवादिशब्दश्रवणादगवादिव्यावृत्तिः प्रतीयते । ततः सास्नादिमत्यर्थे प्रवृत्तिदर्शनादगवादिबुद्धिजनकं तत्र शब्दान्तरं मृग्यम् ॥ अथैकस्मादेव गोशब्दादर्थद्वयस्यापि सम्भावनान्नार्थः शब्दान्तरेणेति चन्नैवम् । एकस्य परस्परविरुद्धार्थद्वयप्रतिपादनविरोधात् ॥ किञ्च गोशब्दस्यागोव्यावृत्तिविषयत्वे प्रथममगौरिति प्रतीयेत न चैवमतो नान्यापोहः शब्दार्थः ॥ किञ्च अपोहाख्यं सामान्यं वाच्यत्वेन प्रतीयमानं पर्युदासरूपं प्रसज्यरूपं वा? प्रथमपक्षे गोत्वमेव नामान्तरेणोक्तं स्यात् । अभावाभावस्य भावान्तरस्वभावेन व्यवस्थितत्वात् ॥ कश्चायमश्वादिनिवृत्तिलक्षणो भावोऽभिधीयते? न तावत्स्वलक्षणरूपस्तस्य सकलविकल्पवाग्गोचरातिक्रान्तत्वात् ॥ नापि शाबलेयादिव्यक्तिरूपस्तस्यासामान्यत्वप्रसङ्गात् ॥ तस्मात् सकलगोव्यक्तिष्वनुवृत्तप्रत्ययजनकं तत्रैव प्रत्येकं परिसमाप्त्या वर्तमानं सामान्यमेव गोशब्दवाच्यम् । तस्यापोह इति नामकरणे नाममात्रं भिद्येत नार्थ इति । अतो नाद्यः पक्षः श्रेयान् ॥ नापि द्वितीयो गोशब्दादेः क्वचिद्बाह्येऽर्थे प्रवृत्त्ययोगात् । तुच्छाभावाभ्युपगमे परमतप्रवेशानुषंगाच्च ॥ किञ्च गवादयो ये सामान्यशब्दा ये च शाबलेयादयस्तेषां भवदभिप्रायेण पर्यायता स्यात् । अर्थभेदाभावाद्वृक्षपादपादिशब्दवत् ॥ न खलु तुच्छाभावस्य भेदो

युक्तो वस्तुन्येव संसृष्टत्वैकत्त्वनानात्वादिविकल्पानां प्रतीतेः ॥ भेदे वा अभावस्य वस्तुतापत्तिः तल्लक्षणत्त्वाद्वस्तुत्वस्य ॥ न चापोह्यलक्षणसम्बन्धिभेदाद्भेदः । प्रमेयाभिधेयादिशब्दानामप्रवृत्तिप्रसङ्गात् ॥ व्यवच्छेद्यस्यातद्रूपेणाप्यप्रमेयादिरूपत्त्वे ततो व्यवच्छेदायोगात्कथं तत्र सम्बन्धिभेदाद्भेदः? । किञ्च शाबलेयादिष्वेकोऽपोहो न प्रसज्येत किन्तु प्रतिव्यक्ति भिन्न एव स्यात् ॥ अथ शाबलेयादयस्तन्न भिन्दन्ति तर्ह्यश्वादयोऽपि भेदका माभूवन् ॥ यस्यान्तरङ्गाः शाबलेयादयो न भेदकास्तस्याश्वादयो भेदका इत्यतिसाहसम् ॥ वस्तुनोऽपि सम्बधिभेदाद्भेदो नोपलभ्यते किमुतावस्तुनि ॥ तथाह्येक एव देवदत्तादिः कटककुण्डलादिभिरभिसम्बन्ध्यमानो न नानात्वमास्तिघ्नुवानः समुपलभ्यत इति ॥ भवतु वा सम्बन्धिभेदाद्भेदस्तथापि न वस्तुभूतसामान्यमन्तरेणान्यापोहाश्रयः सम्बन्धी भवतां भवितुमर्हति । तथाहि यदि शाबलेयादिषु वस्तुभूतसारूप्याभावोऽश्वादिपरिहारेण तत्रैव विशिष्टाभिधानप्रत्ययौ कथं स्याताम् । ततः सम्बन्धिभेदाद्भेदमिच्छतापि सामान्यं वास्तवमङ्गीकर्तव्यमिति ॥ किञ्चापोहशब्दार्थपक्षे संकेत एवानुपपन्नस्तद्ग्रहणोपायासम्भवात् ॥ न प्रत्यक्षं तद्ग्रहणसमर्थं तस्य वस्तुविषयत्त्वात् । अन्यापोहस्य चावस्तुत्त्वात् ॥ अनुमानमपि न तत्सद्भावमवबोध-

यति तस्य कार्यस्वभावलिङ्गसम्पाद्यत्वात् ॥ अपोहस्य निरुपाख्येयत्वेनानर्थक्रियाकारित्वेन च स्वभावकार्ययोरसम्भवात् ॥ किञ्च गोशब्दस्यागोपोहाभिधायित्वे गौरित्यत्र गोशब्दस्य किमभिधेयं स्यादज्ञातस्य विधिनिषेधयोरनधिकारात् ॥ अगोवृत्तिरिति चेदितरेतराश्रयत्वमगोव्यवच्छेदो हि अगोनिश्चये भवति स चागौर्गोनिवृत्त्यात्मा गौश्चागोव्यवच्छेदरूप इति ॥ अगौरित्यत्रोत्तरपदार्थोऽप्यनयैव दिशा चिन्तनीयः ॥ नन्वगौरित्यत्रान्य एव विधिरूपो गोशब्दाभिधेयस्तदाऽपोहः शब्दार्थ इति विघटेत । तस्मादपोहस्योक्तयुक्त्या विचार्यमाणस्यायोगान्नान्यापोहः शब्दार्थ इति, स्थितं सहजयोग्यतासङ्केतवशाच्छब्दादयो वस्तुप्रतिपत्तिहेतव इति ॥

स्मृतिरनुपहतेयं प्रत्यभिज्ञानवज्ञा ।
प्रमितिनिरतचिन्ता लैङ्गिकं सङ्गतार्थम् ॥
प्रवचनमनवद्यं निश्चितं देववाचा ।
रचितमुचितवाग्भिस्तथ्यमेतेन गीतम् ॥ १ ॥

इति परीक्षामुखस्य लघुवृत्तौ परोक्षप्रपञ्चस्तृतीयः समुद्देशः ॥ ३ ॥

अथ स्वरूपसङ्ख्याविप्रतिपत्तिं निराकृत्य विषयविप्रतिपत्तिनिरासार्थमाह—

॥ सामान्यविशेषात्मा तदर्थो विषयः ॥ १ ॥

तस्य प्रामाण्यस्य ग्राह्योऽर्थो विषय इति यावत्। स एव विशिष्यते सामान्यविशेषात्मा। सामान्यविशेषौ वक्ष्यमाणलक्षणौ तावात्मानौ यस्येति विग्रहः॥ तदुभयग्रहणमात्मग्रहणं च केवलस्य सामान्यस्य विशेषस्य तदुभयस्य वा स्वतन्त्रस्य प्रमाणविषयत्वप्रतिषेधार्थम्। तत्र सन्मात्रदेहस्य परब्रह्मणो निरस्तत्त्वात्तदितरद्विचार्यते॥ तत्र सांख्यैः प्रधानं सामान्यमुक्तं 'त्रिगुणमविवेकिविषयः सामान्यमचेतनं प्रसवधर्मिव्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमानिति' वचनात्॥ तच्च केवलं प्रधानं महदादिकार्यनिष्पादनाय प्रवर्तमानं किमप्यपेक्ष्य प्रवर्तते निरपेक्ष्य वा? । प्रथमपक्षे तन्निमित्तं वाच्यं यदपेक्ष्य प्रवर्तते॥ ननु पुरुषार्थ एव तत्र कारणं, पुरुषार्थेन हेतुना प्रधानं प्रवर्तते। पुरुषार्थश्च द्वेधा, शब्दाद्युपलब्धिर्गुणपुरुषान्तरविवेकदर्शनं चेत्यभिधानादिति चेत् सत्यम्। तथा प्रवर्तमानमपि बहुधानकं पुरुषकृतं कञ्चिदुपकारं समासाद्य प्रवर्तेतानासादयद्वा? प्रथमपक्षे स उपकारस्तस्माद्भिन्नोऽभिन्नो वा? यदि भिन्नस्तदा तस्येति व्यपदेशाभावः। सम्बन्धाभावात्तदभावश्च

समवायादेरनभ्युपगमात् । तादात्म्यं च भेदविरोधीति ॥ अथाभिन्न उपकार इति पक्ष आश्रीयते तदा प्रधानमेव तेन कृतं स्यात् ॥ अथोपकारनिरपेक्षमेव प्रधानं प्रवर्त्तते तर्हि मुक्तात्मानम्प्रत्यपि प्रवर्त्तेताविशेषात् ॥ एतेन निरपेक्षप्रवृत्तिपक्षोऽपि प्रत्युक्तस्तत एव ॥ किञ्च सिद्धे प्रधाने सर्वमेतदुपपन्नं स्यात् न च तत्सिद्धिः कुतश्चिन्निश्चीयत इति ॥ ननु कार्याणामेकान्वयदर्शनादेककारणप्रभवत्त्वं भेदानां परिणामदर्शनाच्चेति । तदप्यचारुचर्वितं सुखदुःखमोहरूपतया घटादेरन्वयाभावादन्तस्तत्वस्यैव तथोपलम्भात् ॥ अथान्तस्तत्वस्य न सुखादिपरिणामः किन्तु तथापरिणममानप्रधानसंसर्गादात्मनोऽपि तथा प्रतिभास इति तदप्यनुपपन्नम् । अप्रतिभासमानस्यापि संसर्गकल्पनायां तत्त्वेयत्ताया निश्चेतुमशक्तेः । तदुक्तम्—संसर्गादविभागश्चेदयोगोलकवह्निवत् ॥ भेदाभेदव्यवस्थैवमुत्पन्ना सर्ववस्तुषु ॥ १ ॥ इति। यदपि परिणामाख्यं साधनं, तदप्येकप्रकृतिकेषु घटघटीशरावोदञ्चनादिष्वनेकप्रकृतिकेषु पटकुटमकुटशकटादिषु चोपलम्भादनैकान्तिकमिति न ततः प्रकृतिसिद्धिः । तदेवं प्रधानग्रहणोपायासम्भवात्सम्भवे वा ततः कार्योदयायोगाच्च ॥ यदुक्तं परेण— प्रकृतेर्महान् ततोऽहंकारस्तस्माद्गणश्च षोडशकः ॥ तस्मादपि षोडशकात्पञ्चभ्यः पंच भूतानीति ॥ सृष्टिक्रमे, मूलप्रकृतिर-

विकृतिर्महदाद्याः प्रकृतिविकृतयः सप्तषोडशकश्च विकारो न प्रकृतिर्नविकृतिः पुरुष इति स्वरूपाख्यानं च, वन्ध्यासुतसौरूप्यवर्णनमिवासद्विषयत्त्वादुपेक्षामर्हति ॥ अमूर्तस्याकाशस्य मूर्तस्य पृथिव्यादेश्चैककारणकत्त्वायोगाच्च ॥ अन्यथा अचेतनादपि पंचभूतकदम्बकाच्चैतन्यसिद्धश्चार्वाकमतसिद्धिप्रसङ्गात् सांख्यगन्ध एव न भवेत् ॥ सत्कार्यवादप्रतिषेधश्चान्यत्र विस्तरेणोक्त इति नेहोच्यते संक्षेपस्वरूपादस्येति ॥ तथा विशेषा एव तत्त्वं तेषामसमानेतरविशेषेभ्योऽशेषात्मना विश्लेषात्मकत्त्वात्सामान्यस्यैकस्यानेकत्र व्याप्त्या वर्तमानस्य सम्भवाभावाच्च ॥ तस्यैकव्यक्तिनिष्ठस्य सामस्त्येनोपलब्धस्य तथैव व्यक्त्यन्तरेऽनुपलम्भप्रसङ्गात् ॥ उपलम्भे वा तन्नानात्वापत्तेर्युगपत् भिन्नदेशतया सामस्त्येनोपलब्धेस्तद्व्यक्तिवदन्यथा व्यक्तयोऽपि भिन्ना माभूवन्निति ॥ ततो बुध्द्यभेद एव सामान्यम् । तदुक्तम्— एकल दृष्टो भावो हि क्वचिन्नान्यत्र दृश्यते । तस्मान्न भिन्नमस्त्यन्यत्सामान्यं बुध्द्यभेदतः ॥ १ ॥ इति ॥ ते च विशेषाः परस्परासम्बध्दा एव, तत्सम्बन्धस्य विचार्यमाणस्यायोगात् ॥ एकदेशेन सम्बन्धे अणुषट्केन युगपद्योगादणोः षडंशतापत्तेः ॥ सर्वात्मनाभिसम्बन्धे पिण्डस्याणुमात्रकत्वापत्तेः ॥ अवयविनिषेधाच्चासम्बद्धत्वमेषामुपपद्यत एव ॥ तन्निषेधश्च वृत्तिविकल्पादिबा-

घनात् ॥ तथाहि अवयवा अवयविनि वर्तन्त इति नाभ्युपगतम् । अवयवी चावयवेषु वर्तमानः किमेकदेशेन वर्त्तते सर्वात्मना वा? एकदेशेन वृत्ताववयवान्तरप्रसङ्गः । तत्राप्येकदेशान्तरेणावयविनो वृत्तावनवस्था ॥ सर्वात्मना वर्तमानोऽपि प्रत्यवयवं स्वभावभेदेन वर्तेत, आहोस्विदेकरूपेणेति? प्रथमपक्षे अवयविबहुत्वापत्तिः ॥ द्वितीयपक्षे तु अवयवानामेकरूपत्वापत्तिरिति । प्रत्येकं परिसमाप्त्या वृत्तावप्यवयविबहुत्वमिति ॥ तथा यत् दृश्यं सन्नोलभ्यते तन्नास्त्येव यथा गगनेन्दीवरं नोपलभ्यते चावयवेष्ववयवीति ॥ तथा यद्ग्रहे यद्बुद्ध्यभावस्तत्ततो नार्थान्तरम् । यथा वृक्षाग्रहे वनमिति ॥ ततश्च निरंशा एवान्योन्यासंस्पर्शिणो रूपादिपरमाणवस्ते च एकक्षणस्थायिनो न नित्या, विनाशं प्रत्यन्यानपेक्षणात् ॥ प्रयोगश्च यो यद्भावं प्रत्यन्यानपेक्षः स तत्स्वभावनियतो यथान्त्या कारणसामग्री स्वकार्ये ॥ नाशो हि मुद्गरादिना क्रियमाणस्ततो भिन्नोऽभिन्नो वा क्रियते? भिन्नस्य करणे घटस्य स्थितिरेव स्यात् ॥ अथ विनाशसम्बन्धान्नष्ट इति व्यपदेश इति चेत्, भावाभावयोः कः सम्बन्धः? न तावत्तादात्म्यं तयोर्भेदात् । नापि तदुत्पत्तिरभावस्य कार्याधारत्वाघटनात् । अभिन्नस्य करणे घटादिरेव कृतः स्यात् । तस्य च प्रागेव निष्पन्नत्वाद्व्यर्थं करणमित्यन्यानपेक्षत्वं सिद्धमिति,

विनाशस्वभावनियतत्वं साधयत्येव ॥ सिद्धे चानित्यानां तत्स्वभावनियतत्वे तदितरेषामात्मादीनां विमत्यधिकरणभावापन्नानां सत्त्वादिना साधनेन तद्दृष्टान्ताद्भवत्येव क्षणस्थितिस्वभावत्वम् ॥ तथाहि यत्सत्तत्सर्वमेकक्षणस्थितिस्वभावं यथा घटः सन्तश्चामी भावा इति ॥ अथवा सत्त्वमेव विपक्षे बाधकप्रमाणबलेन दृष्टान्तनिरपेक्षमशेषस्य वस्तुनः क्षणिकत्वमनुमापयति ॥ तथाहि सत्त्वमर्थक्रियया व्याप्तमर्थक्रिया च क्रमयौगपद्याभ्यां, ते च नित्यान्निवर्त्तमाने स्वव्याप्यामर्थक्रियामादाय निवर्तेते । सापि स्वव्याप्यं सत्त्वमिति, नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्सत्त्वासम्भावनं विपक्षे बाधकप्रमाणमिति ॥ नहि नित्यस्य क्रमेण युगपद्वा सा सम्भवति । नित्यस्यैकेनैव स्वभावेन पूर्वापरकालभावि कार्यद्वयं कुर्वतः कार्याभेदकत्वात्तस्यैकस्वभावत्वात् । तथापि कार्यनानात्वे अन्यत्र कार्यभेदात् कारणभेदकल्पना विफलैव स्यात् । तादृशमेकमेव किञ्चित्कारणं कल्पनीयं, येनैकस्वभावेनैकेनैव चराचरमुत्पद्यत इति ॥ अथ स्वभावनानात्वमेव तस्य कार्यभेदादिष्यत इति चेत्तर्हि, ते स्वभावास्तस्य सर्वदा सम्भविनस्तदा कार्यसाङ्कर्यम् । नो चेत्तदुत्पत्तिकारणं वाच्यम् । तस्मादेवमित्येकस्वभावात्तदुत्पत्तौ तत्स्वभावानां सदा सम्भवात्तेषां कार्याणां युगपत्प्राप्तिः ॥ सहकारिक्रमापेक्षया

तत्स्वभावानां क्रमेण भावान्नोक्तदोष इति चेत्तदपि न साधुसङ्गतम् । समर्थस्य नित्यस्य परापेक्षायोगात् ॥ तैः सामर्थ्यकरणे नित्यताहानिः ॥ तस्माद्भिन्नमेव सामर्थ्यं तैर्विधीयत इति न नित्यताहानिरिति चेत्तर्हि नित्यमकिंचित्करमेव स्यात् । सहकारिजनितसामर्थ्यस्यैव कार्यकारित्वात्तत्सम्बन्धात्तस्यापि कार्यकारित्वे तत्सम्बन्धस्यैकस्वभावत्वे सामर्थ्यनानात्वाभावान्न कार्यभेदः । अनेकस्वभावत्वे क्रमवत्त्वे च कार्यवत्तस्यापि साङ्कर्यमिति सर्वमावर्तत इति चक्रकप्रसङ्गः ॥ तस्मान्न क्रमेण कार्यकारित्वं नित्यस्य । नापि युगपत् अशेषकार्याणां युगपदुत्पत्तौ द्वितीयक्षणे कार्याकरणादनर्थक्रियाकारित्वेनावस्तुत्वप्रसंगादिति नित्यस्य क्रमयौगपद्याभावः सिद्ध एवेति सौगताः प्रतिपेदिरे ॥ तेऽपि न युक्तवादिनः— सजातीयेतरव्यावृत्तात्मनां विशेषाणामनंशानां ग्राहकस्य प्रमाणस्याभावात् ॥ प्रत्यक्षस्य स्थिरस्थूलसाधारणाकारवस्तुग्राहकत्वेन निरंशवस्तुग्रहणायोगात् ॥ न हि परमाणवः परस्परासंबद्धाश्चक्षुरादिबुद्धौ प्रतिभान्ति तथा सत्यविवादप्रसंगात् ॥ अथानुभूयन्त एव प्रथमं तथाभूताः क्षणाः पश्चात्तु विकल्पवासनाबलादान्तरादन्तरालानुपलम्भलक्षणाद्बाह्याच्चाविद्यमानोऽपि स्थूलाद्याकारो विकल्पबुद्धौ चकास्ति ॥ स च तदाकारेणानुरज्यमानः स्वव्यापारं तिरस्कृत्य प्रत्यक्षव्यापारपु-

रःसरत्वेन प्रवृत्तत्त्वात्प्रत्यक्षायत इति । तदप्यतिबालविलसितम् ॥ निर्विकल्पकबोधस्यानुपलक्षणात् । गृहीते हि निर्विकल्पकेतरयोर्भेदे अन्याकारानुरागस्यान्यत्र कल्पना युक्ता स्फटिकजपाकुसुमयोरिव नान्यथेति ॥ एतेन तयोर्युगपद्वृत्तेर्लघुवृत्तेर्वा तदेकत्त्वाध्यवसाय इति निरस्तं तस्यापि कोशपानप्रत्येयत्त्वादिति ॥ केन वा तयोरेकत्त्वाध्यवसायः? न तावद्विकल्पेन, तस्य विकल्पवार्तानभिज्ञत्त्वात् ॥ नाप्यनुभवेन, तस्य विकल्पागोचरत्त्वात् ॥ न च तदुभयाविषयं तदेकत्त्वाध्यवसाये समर्थमतिप्रसङ्गात् ॥ ततो न प्रत्यक्षबुद्धौ तथाविधविशेषावभासः ॥ नाप्यनुमानबुद्धौ तदविनाभूतस्वभावकार्यलिङ्गाभावादनुपलम्भोऽसिद्ध एव । अनुवृत्ताकारस्य स्थूलाकारस्य चोपलब्धेरुक्तत्वात् ॥ यदपि परमाणूनामेकदेशेन सर्वात्मना वा सम्बन्धो नोपपद्यत इति तत्रानभ्युपगम एव परिहारः ॥ स्निग्धरूक्षाणां सजातीयानां च द्व्यधिकगुणानां कथञ्चित्स्कन्धाकारपरिणामात्मकस्य सम्बन्धस्याभ्युपगमात् ॥ यच्चावयविनि वृत्तिविकल्पादि बाधकमुक्तं तत्रावयविनो वृत्तिरेव यदि नोपपद्यते तदा न वर्तत इत्यभिधातव्यम् ॥ नैकदेशादिविकल्पस्तस्य विशेषान्तरान्तरीयकत्वात् ॥ तथा हि नैकदेशेन वर्त्तते नापि सर्वात्मनेत्युक्ते प्रकारान्तरेण वृत्तिरित्यभिहितं स्यात् । अन्यथा न वर्त्तत इत्येव वक्तव्य-

मिति विशेषप्रतिषेधस्य शेषाभ्यनुज्ञानरूपत्वात् कथञ्चित्तादात्म्यरूपेण वृत्तिरित्यवसीयते ॥ तत्र यथोक्तदोषाणामनवकाशाद्विरोधादिदोषश्चाग्रे प्रतिषेत्स्यत इति नेह प्रतन्यते ॥ यच्चैकक्षणस्थायित्वे साधनं 'यो यद्भावं प्रतीत्याद्युक्तं, तदप्यसाधनमासिद्धादिदोषदुष्टत्वात् ॥ तत्रान्यानपेक्षत्वं तावदसिद्धं घटाद्यभावस्य मुद्गरादिव्यापारान्वयव्यतिरेकानुविधायित्वात् तत्कारणत्वोपपत्तेः ॥ कपालादिपर्यायान्तराभावो हि घटादेरभावस्तुच्छाभावस्य सकलप्रमाणगोचरातिक्रान्तत्वात् ॥ किञ्च अभावो यदि स्वतन्त्रो भवेत्तदाऽन्यानपेक्षत्वं विशेषणं युक्तम् । न च सौगतमते सोऽस्तीति हेतुप्रयोगानवतार एव, अनैकान्तिकं चेदं शालिबीजस्य कोद्रवांकुरजननम्प्रति अन्यानपेक्षत्वेऽपि तज्जननस्वभावानियतत्वात् ॥ तत्स्वभावत्त्वे सतीति विशेषणान्न दोष इति चेत्— न सर्वथा पदार्थानां विनाशस्वभावासिद्धेः । पर्यायरूपेणैव हि भावानामुत्पादविनाशावङ्गीक्रियेते न द्रव्यरूपेण— ॥ समुदेति विलयमृच्छति भावो नियमेन पर्ययनयस्य । नोदेति नो विनश्यति भावनया लिङ्गितो नित्यम् ॥ १ ॥ इति वचनात् ॥ नहि निरन्वयविनाशे पूर्वक्षणस्य ततो मृताच्छिखिनः केकायितस्येवोत्तरक्षणस्योत्पत्तिर्घटते । द्रव्यरूपेण कथञ्चिदत्यक्तरूपस्यापि सम्भवात् न सर्वथा भावानां विनाशस्वभावत्वं युक्तम् ॥

न च द्रव्यरूपस्य गृहीतुमशक्यत्वादभावस्तद्ग्रहणोपायस्य प्रत्यभिज्ञानस्य बहुलमुपलम्भात्तत्प्रामाणस्य च प्रागेवोक्तत्वादुत्तरकार्योत्पत्त्यन्यथानुपपत्तेश्च सिद्धत्वात् ॥ यच्चान्यत्साधनं सत्त्वाख्यं तदपि विपक्षवत्स्वपक्षेऽपि समानत्वान्न साध्यसिद्धिनिबन्धनम् ॥ तथा हि सत्त्वमर्थक्रियया व्याप्तमर्थक्रिया च क्रमयौगपद्याभ्यां ते च क्षणिकान्निवर्तमाने स्वव्याप्यामर्थक्रियामादाय निवर्तेते । सा च निवर्तमाना स्वव्याप्यं सत्त्वमिति नित्यस्येव क्षणिकस्यापि खरविषाणवदसत्त्वमिति न तत्र सत्त्वव्यवस्था ॥ न च क्षणिकस्य वस्तुनः क्रमयौगपद्याभ्यामर्थक्रियाविरोधोऽसिद्धस्तस्य देशकृतस्य कालकृतस्य वा क्रमस्यासम्भवात् ॥ अवस्थितस्यैकस्य हि नानादेशकालकलाव्यापित्वं देशक्रमः कालक्रमश्चाभिधीयते ॥ न च क्षणिके सोऽस्ति, 'यो यत्रैव स तत्रैव यो यदैव तदैव सः ॥ न देशकालयोर्व्याप्तिर्भावानामिह विद्यत, इति स्वयमेवाभिधानात् ॥ न च पूर्वोत्तरक्षणानामेकसन्तानापेक्षया क्रमः सम्भवति, सन्तानस्य वास्तवत्वे तस्यापि क्षणिकत्वेन क्रमायोगादक्षणिकत्वेऽपि वास्तवत्वे तेनैव सत्त्वादिसाधनमनैकान्तिकम । अवास्तवत्वे न तदपेक्षः क्रमो युक्त इति ॥ नापि यौगपद्येन तत्रार्थक्रिया सम्भवति, युगपदेकेन स्वभावेन नानाकार्यकरणे तत्कार्यैकत्वं स्यात् ॥ नानास्वभावकल्पनायां ते स्वभावा-

स्तेन व्यापनीयाः । तत्रैकेन स्वभावेन तद्व्याप्तौ तेषामेकरूपता, नानास्वभावेन चेदनवस्था ॥ अथैकत्रैकस्योपादानभाव एवान्यत्र सहकारिभाव इति न स्वभावभेद इष्यते । तर्हि नित्यस्यैकरूपस्यापि वस्तुनः क्रमेण नानाकार्यकारिणः स्वभावभेदः कार्यसाङ्कर्यं वा माभूत् ॥ अक्रमात् क्रमिणामनुत्पत्तेर्नैवमिति चेदेकानंशकारणाद्युगपदनेककारणसाध्यानेककार्यविरोधादक्रमिणोऽपि न क्षणिकस्य कार्यकारित्वमिति ॥ किञ्च भवत्पक्षे सतोऽसतो वा कार्यकारित्वम्? सतः कार्यकर्तृत्वे सकलकालकलाव्यापिक्षणानामेकक्षणवृत्तिप्रसङ्गः ॥ द्वितियपक्षे खरविषाणादेरपि कार्यकारित्वमसत्त्वाविशेषात् सत्त्वलक्षणस्य व्यभिचारश्च, तस्मान्न विशेषैकान्तपक्षः श्रेयान् ॥ नापि सामान्यविशेषौ परस्परानपेक्षाविति यौगमतमपि युक्तियुक्तमवभाति, तयोरन्योन्यभेदे द्वयोरन्यतरस्यापि व्यवस्थापयितुमशक्तेः ॥ तथा हि— विशेषास्तावत् द्रव्यगुणकर्मात्मनः सामान्यं तु परापरभेदाद्विविधं, तत्र परसामान्यात्सत्तालक्षणाद्विशेषाणां भेदे सत्त्वापत्तिरिति । तथाच प्रयोगः । द्रव्यगुणकर्माण्यसद्रूपाणि सत्त्वादत्यन्तं भिन्नत्वात्प्रागभावादिवदिति ॥ न सामान्यविशेषसमवायैर्व्यभिचारः । तत्र स्वरूपसत्त्वस्याभिन्नस्य परैरभ्युपगमात् ॥ ननु द्रव्यादीनां प्रमाणोपपन्नत्वे धर्मिग्राहकप्रमाणबाधितो हेतुर्येन हि प्रमाणेन

द्रव्यादयो निश्चीयन्ते तेन तत्सत्त्वमपीति ॥ अथ 'न प्रमाणप्रतिपन्ना द्रव्यादयस्तर्हि हेतोराश्रयासिद्धिरिति' तदयुक्तम् । प्रसङ्गसाधनात्प्रागभावादौ हि सत्त्वाद्भेदोऽसत्त्वेन व्याप्त उपलभ्यते ततश्च व्याप्यस्य द्रव्यादावभ्युपगमो व्यापकाभ्युपगमनान्तरीयक इति प्रसङ्गसाधने अस्य दोषस्याभावात् ॥ एतेन द्रव्यादीनामप्यद्रव्यादित्वं द्रव्यत्त्वादेर्भेदे चिन्तितं बोद्धव्यम् । कथं वा षण्णां पदार्थानां परस्परं भेदे प्रतिनियतस्वरूपव्यवस्था? द्रव्यस्य हि द्रव्यमिति व्यपदेशस्य द्रव्यत्वाभिसम्बन्धाद्विधाने ततः पूर्वं द्रव्यस्वरूपं किञ्चिद्वाच्यं, येन सह द्रव्यत्त्वाभिसम्बन्धः स्यात् ॥ द्रव्यमेव स्वरूपमिति चेन्न, तद्व्यपदेशस्य द्रव्यत्त्वाभिसम्बन्धनिबन्धनतया स्वरूपत्वायोगात् ॥ सत्त्वं निजं रूपमिति चेन्न, तस्यापि सत्तासम्बन्धादेव तद्व्यपदेशकरणात् ॥ एवं गुणादिष्वपि वाच्यम् ॥ केवलं सामान्यविशेषसमवायानामेव स्वरूपसत्त्वेन तथाव्यपदेशोपपत्तेस्तत्रव्यवस्थैव स्यात् ॥ ननु जीवादिपदार्थानां सामान्यविशेषात्मकत्वं स्याद्वादिभिरभिधीयते तयोश्च वस्तुनोर्भेदाभेदाविति ॥ तौ च विरोधादिदोषोपनिपातान्नैकत्र सम्भविनाविति ॥ तथाहि—भेदाभेदयोर्विधिनिषेधयोरेकत्राभिन्ने वस्तुन्यसम्भवः शीतोष्णस्पर्शयोर्वेति ॥ भेदस्यान्यदधिकरणमभेदस्य चान्यदिति वैयधिकरण्यम् ।

यमात्मानं पुरोधाय भेदो यं च समाश्रित्याभेदः तावात्मानौ भिन्नौ चाभिन्नौ च तत्रापि तथा परिकल्पनादनवस्था। येन रूपेण भेदस्तेन भेदश्चाभेदश्चेति सङ्करः। येन भेदस्तेनाभेदो येनाभेदस्तेन भेद इति व्यतिकरः। भेदाभेदात्मकत्वे च वस्तुनोऽसाधारणाकारेण निश्चेतुमशक्तेः संशयः। ततश्चाप्रतिपत्तिस्ततोऽभावः। इत्यनेकान्तात्मकमपि न सौख्यमाभजतीति केचित्। तेऽपि न प्रातीतिकवादिनः। विरोधस्य प्रतीयमानयोरसम्भवादनुपलम्भसाध्यो हि विरोधः, तत्रोपलभ्यमानयोः को विरोधः॥ यच्च शीतोष्णस्पर्शयोर्वेति दृष्टान्ततयोक्तं तच्च धूपदहनाद्येकावयविनः शीतोष्णस्पर्शस्वभावस्योपलब्धेरयुक्तमेव॥ एकस्य चलाचलरक्तारक्तावृतानावृतादिविरुद्धधर्माणां युगपदुपलब्धेश्च प्रकृतयोरपि न विरोध इति॥ एतेन वैयधिकरण्यमप्यपास्तम्। तयोरेकाधिकरणत्वेन प्रतीतेः। अत्रापि प्रागुक्तनिदर्शनान्येव बोद्धव्यानि॥ यच्चानवस्थानं दूषणं तदपि स्याद्वादिमतानभिज्ञैरेवापादितम्। तन्मतं हि सामान्यविशेषात्मके वस्तुनि सामान्यविशेषावेव भेदः। भेदध्वनिना तयोरेवाभिधानात्। द्रव्यरूपेणाभेद इति। द्रव्यमेवाभेद एकानेकात्मकत्वाद्वस्तुनः॥ यदि वा भेदनयप्राधान्येन वस्तुधर्माणामानन्त्यान्नानवस्था। तथा हि– यत्सामान्यं यश्च विशेषस्तयोरनुवृत्तव्यावृत्ता-

कारेण भेदस्तयोश्चार्थक्रियाभेदाद्भेदश्च शक्तिभेदात् । सोऽपि सहकारिभेदादित्यनन्तधर्माणामङ्गीकरणात् कुतोऽनवस्था ॥ तथा चोक्तम् । मूलक्षतिकरीमाहुरनवस्थां हि दूषणम् । वस्त्वानन्त्येप्यशक्तौ च नानवस्था विचार्यते ॥ १ ॥ इति ॥ यौ च सङ्करव्यतिकरौ तावपि मेचकज्ञाननिदर्शनेन सामान्यविशेषदृष्टान्तेन च परिहृतौ ॥ अथ तत्र तथा प्रतिभासनं परस्यापि वस्तुनि तथैव प्रतिभासोऽस्तु तस्य पक्षपाताभावान्निर्णीते संशयोऽपि न युक्तः । तस्य चलितप्रतिपत्तिरूपत्वादचलितप्रतिभासे दुर्घटत्त्वात् । प्रतिपन्ने वस्तुन्यप्रतिपत्तिरित्यतिसाहसम् । उपलब्ध्यभिधानादनुपलम्भोऽपि न सिद्धस्ततो नाभाव इति दृष्टेष्टाविरुद्धमनेकान्तशासनं सिद्धम् । एतेनावयवावयविनोर्गुणगुणिनोः कर्मतद्वतोश्च कथं चिद्भेदाभेदौ प्रतिपादितौ बोद्धव्यौ ॥ अथ समवायवशाद्भिन्नेष्वप्यभेदप्रतीतिरनुपपन्नब्रह्मतुलाख्यज्ञानस्येति चेत् न, तस्यापि ततोऽभिन्नस्य व्यवस्थापयितुमशक्तेः । तथा हि— समवायवृत्तिः स्वसमवायिषु वृत्तिमती स्यादवृत्तिमती वा? वृत्तिमत्त्वे स्वेनैव वृत्त्यन्तरेण वा? न तावदाद्यः पक्षः समवाये समवायानभ्युपगमात् । पञ्चानां समवायित्त्वमिति वचनात् ॥ वृत्त्यन्तरकल्पनायां तदपि स्वसम्बन्धिषु वर्तते न वेति कल्पनायां वृत्त्यन्तरपरम्पराप्राप्तेरनवस्था ॥ वृत्त्यन्तरस्य स्वसंबन्धिषु

वृत्त्यन्तरानभ्युपगमान्नानवस्थेति चेत्, तर्हि समवायेऽपि वृत्त्यन्तरं माभूत ॥ अथ समवायो न स्वाश्रयवृत्तिरङ्गीक्रियते, तर्हि गुणादीनामाश्रितत्वमिति ग्रन्थो विरुध्यते ॥ अथ समवायिषु सत्स्वेव समवायप्रतीतिस्तस्याश्रितत्वमुपकल्प्यते तर्हि मूर्तद्रव्येषु सत्स्वेव दिग्लिङ्गस्येदमतः पूर्वेण इत्यादिज्ञानस्य काललिङ्गस्य च परापरादिप्रत्ययस्य सद्भावात्तयोरपि तदाश्रितत्वं स्यात । तथा चायुक्तमेतदन्यत्र नित्यद्रव्येभ्य इति ॥ किञ्च समवायस्यानाश्रितत्वे सम्बन्धरूपतैव न घटते । तथा च प्रयोगः— समवायो न सम्बन्धः । अनाश्रितत्वात् दिगादिवदिति ॥ अत्र समवायस्य धर्मिणः कथंचित्तादात्म्यरूपस्य यानेकस्य च परैः प्रतिपन्नत्वाद्धर्मिग्राहकप्रमाणवाधा आश्रयासिद्धिश्च न वाच्येति ॥ तस्याश्रितत्वेऽप्येतद्भिधीयते न समवाय एकः सम्बन्धात्मकत्वे सत्याश्रितत्वात् संयोगवत् । सत्तयाऽनेकान्त इति सम्बन्धविशेषणम् ॥ अथ संयोगे निबिडशिथिलादिप्रत्ययनानात्वान्नानात्वं नान्यत्र विपर्ययादिति चेत् न, समवायेऽप्युत्पत्तिमत्त्वनश्वरत्वप्रत्ययनानात्वस्य सुलभत्वात् ॥ सम्बन्धिभेदाद्भेदोऽन्यत्रापि समान इति नैकत्रैव पर्यनुयोगो युक्तः ॥ तस्मात्समवायस्य परपरिकल्पितस्य विचारासहत्वान्न तद्वशाद्गुणगुण्यादिष्वभेदप्रतीतिः ॥ अथ भिन्नप्रतिभासादवयवावयव्यादीनां भेद एवेति चेन्न, भेदप्रति—

भासस्याभेदाविरोधात् । घटपटादीनामपि कथञ्चिदभेदोपपत्तेः ॥ सर्वथा प्रतिभासभेदस्यासिद्धेश्च ॥ इदमित्याद्यभेदप्रतिभासस्यापि भावात्ततः कथंचिद्भेदाभेदात्मकं द्रव्यपर्यायात्मकं सामान्यविशेषात्मकं च तत्त्वं तीरादर्शिशकुनिन्यायेनायातमित्यलमतिप्रसङ्गेन ॥ इदानीमनेकान्तात्मकवस्तुसमर्थनार्थमेव हेतुद्वयमाह—

॥ अनुवृत्तव्यावृत्तप्रत्ययगोचरत्वात्पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामेनार्थक्रियोपपत्तेश्चेति ॥

अनुवृत्ताकारो हि गौर्गौरित्यादिप्रत्ययः । व्यावृत्ताकारः श्यामः शबल इत्यादिप्रत्ययः । तयोर्गोचरस्तस्य भावस्तत्त्वं तस्मात् । एतेन तिर्यक्सामान्यव्यतिरेकलक्षणविशेषद्वयात्मकं वस्तु साधितम् । पूर्वोत्तराकारयोर्यथासंख्येन परिहारावाप्ती, ताभ्यां स्थितिः, सैव लक्षणं यस्य, स चासौ परिणामश्च, तेनार्थक्रियोपपत्तेश्चेत्यनेन तूर्ध्वतासामान्यपर्यायाख्यविशेषद्वयरूपं वस्तु समर्थितं भवति ॥ अथ प्रथमोद्दिष्टसामान्यभेदं दर्शयन्नाह—

॥ सामान्यं द्वेधा तिर्यगूर्ध्वताभेदात् ॥ ३ ॥

प्रथमभेदं सोदाहरणमाह—

॥ सदृशपरिणामस्तिर्यक्, खण्डमुण्डादिषु गोत्ववत् ॥ ४ ॥

नित्यैकरूपस्य गोत्वादेः क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् ।

प्रत्येकं परिसमाप्त्या व्यक्तिषु वृत्त्ययोगाच्चानेकं सदृशपरिणामात्मकमेवेति तिर्यक्सामान्यमुक्तम् ॥ द्वितीयभेदमपि सदृष्टान्तमुपदर्शयति—

॥ परापरविवर्त्तव्यापिद्रव्यमूर्ध्वता मृदिव स्थासादिष्विति ५

सामान्यमिति वर्तते तेनायमर्थः- उर्ध्वतासामान्यं भवति । किं तत्? द्रव्यम् । तदेव विशिष्यते परापरविवर्तव्यापीति पूर्वापरकालवर्तित्रिकालानुयायीत्यर्थः । चित्रज्ञानस्यैकस्य युगपद्भाव्यनेकस्वगतनीलाद्याकारव्याप्तिवदेकस्य क्रमभाविपरिणामव्यापित्त्वमित्यर्थः ॥ विशेषस्यापि द्वैविध्यमुपदर्शयति—

॥ विशेषश्चेति ॥ ६ ॥

द्वेधेत्यधिक्रियमाणेनाभिसम्बन्धः । तदेव प्रतिपादयति—

॥ पर्यायव्यतिरेकभेदादिति ॥ ७ ॥

प्रथमविशेषभेदमाह—

॥ एकस्मिन्द्रव्ये क्रमभाविनः परिणामाः पर्याया आत्मनि हर्षविषादादिवदिति ॥ ८ ॥

अत्रात्मद्रव्यं स्वदेहप्रमितिमात्रमेव न व्यापकम् । नापि वटकणिकामात्रम् । न च कायाकारपरिणतभूतकदम्बकमिति, तत्र व्यापकत्त्वे परेषामनुमानमात्मा व्यापकः द्रव्यत्त्वे सत्यमूर्तत्त्वादा-

काशवदिति । तत्र यदि रूपादिलक्षणं मूर्तत्वं तत्प्रतिषेधोऽमूर्तत्वं तदा मनसाऽनेकान्तः ॥ अथासर्वगतद्रव्यपरिमाणं मूर्तत्वं तन्निषेधस्तथा चेत्परंप्रति साध्यसमो हेतुः ॥ यच्चापरमनुमानं– आत्मा व्यापकः अणुपरिमाणानधिकरणत्वे सतिनि त्यद्रव्यत्त्वादाकाशवदिति । तदपि न साधुसाधनम् । अणुपरिमाणानधिकरणत्त्वमित्रत्य किमयं नञर्थः पर्युदासः प्रसज्यो वा भवेत्? । तत्राद्यपक्षे अणुपरिमाणप्रतिषेधेन महापरिमाणमवान्तरपरिमाणं परिमाणमात्रं वा? महापरिमाणं चेत् साध्यसमो हेतुः। अवान्तरपरिमाणं चेत् विरुद्धो हेतुरवान्तरपरिमाणाधिकरणत्वं ह्यव्यापकत्वमेव साधयतीति ॥ परिमाणमात्रं चेत्– तत्परिमाणसामान्यमङ्गीकर्तव्यम् । तथाचाणुपरिमाणप्रतिषेधेन परिमाणसामान्याधिकरणत्वमात्मन इत्युक्तं । तच्चानुपपन्नं, व्यधिकरणासिद्धिप्रसङ्गात् । न हि परिमाणसामान्यमात्मनि व्यवस्थितं किन्तु परिमाणव्यक्तिष्वेवेति ॥ न चावान्तरमहापरिमाणद्वयाधारतयाऽऽत्मन्यप्रतिपन्ने परिमाणमात्राधिकरणता तत्र निश्चेतुं शक्या । दृष्टान्तश्च साधनविकलः । आकाशस्य महापरिमाणाधिकरणतया परिमाणमात्राधिकरणत्त्वायोगात् ॥ नित्यद्रव्यत्त्वं च सर्वथाऽसिद्धम् । नित्यस्य क्रमाक्रमाभ्यामर्थक्रियाविरोधादिति ॥ प्रसज्यपक्षेऽपि तुच्छाभावस्य ग्रहणोपायासम्भवात् न विशेषणत्वम् । न चागृहीतविशेषणं

नाम न चागृहीतविशेषणाविशेष्ये बुद्धिरितिवचनान्न प्रत्यक्षं तद्ग्रहणोपायः सम्बन्धाभावादिन्द्रियार्थसन्निकर्षजं हि प्रत्यक्षं तन्मतेऽप्रसिद्धम् ॥ विशेषणविशेष्यभावकल्पनायामभावस्य नागृहीतस्य विशेषणत्वमिति तदेव दूषणम् । तस्मान्न व्यापकमात्मद्रव्यम् । नापि वटकणिकामात्रं कमनीयकान्ताकुचजघनसंस्पर्शकाले प्रतिलोमकूपमाल्हादनाकारस्य सुखस्यानुभवनात् । अन्यथा सर्वाङ्गीणरोमाञ्चादिकार्योदयायोगात् ॥ आशुवृत्त्यालातचक्रवत् क्रमेणैव तत्सुखमित्यनुपपन्नम् ॥ परापरान्तःकरणसम्बन्धस्य तत्कारणस्य परिकल्पनायां व्यवधानप्रसङ्गात् । अन्यथा सुखस्य मानसप्रत्यक्षत्वायोगादिति ॥ नापि पृथिव्यादिचतुष्टयात्मकत्वमात्मनः सम्भाव्यते । अचेतनेभ्यश्चैतन्योत्पत्त्ययोगाद्धारणेरणद्रवोष्णतालक्षणान्वयाभावाच्च । तदहर्जातबालकस्य स्तनादावभिलाषाभावप्रसङ्गाच्च । अभिलाषो हि प्रत्यभिज्ञाने भवति, तच्च स्मरणे स्मरणं चानुभवे भवतीति पूर्वानुभवः सिद्धः । मध्यदशायां तथैव व्याप्तेः । मृतानां रक्षोयक्षादिकुलेषु स्वयमुत्पन्नत्वेन कथयतां दर्शनात् ॥ केषाञ्चित् भवस्मृतेरुपलम्भाच्चानादिश्चेतनः सिद्ध एव ॥ तथा चोक्तम्— तदहर्जस्तनेहातो रक्षोदृष्टेर्भवस्मृतेः । भूतानन्वयनात्सिद्धः प्रकृतिज्ञः सनातनः ॥ १ ॥ इति ॥ न च स्वदेहप्रमितिरात्मेत्यत्रापि प्रमाणाभा-

वात् सर्वत्र संशय इति वक्तव्यं तत्रानुमानस्य सद्भावात् । तथाहि देवदत्तात्मा तद्देह एव तत्र सर्वत्रैव च विद्यते तत्रैव तत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलम्भात् । यो यत्रैव यत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलभ्यते स तत्रैव तत्र सर्वत्रैव च विद्यते यथा देवदत्तगृहे एव तत्र सर्वत्रैव चोपलभ्यमानः स्वासाधारणभासुरत्वादिगुणः प्रदीपः तथाचायं तस्मात्तथेति । तदसाधारणगुणा ज्ञानदर्शनसुखवीर्यलक्षणास्ते च सर्वाङ्गीणास्तत्रैव चोपलभ्यन्ते ॥ सुखमाल्हादनाकारं विज्ञानं मेयबोधनम् । शक्तिः क्रियानुमेया स्याद्यूनः कान्तासमागमः ॥ १ ॥ इति वचनात् ॥ तस्मादात्मा देहप्रमितिरेव स्थितः ॥ द्वितीयं विशेषभेदमाह—

॥ अर्थान्तरगतो विसदृशपरिणामो व्यतिरेको
गोमहिषादिवत् ॥ ८ ॥

वैसादृश्यं हि प्रतियोगिग्रहणे सत्येव भवति । न चापेक्षिकत्वादस्यावस्तुत्वमवस्तुन्यापेक्षिकत्त्वायोगात् । अपेक्षाया वस्तुनिष्ठत्वात् ॥

॥ स्यात्कारलांच्छितमबाध्यमनन्तधर्म- ।
संदोहवर्मितमशेषमपि प्रमेयम् ॥
॥ देवैः प्रमाणबलतो निरचायि यच्च ।

संक्षिप्तमेव मुनिभिर्विवृतं मयैतत ॥ ३ ॥

इति परीक्षामुखस्य लघुवृत्तौ विषयसमुद्देशश्चतुर्थः ॥ ४ ॥

---

अथेदानीं फलविप्रतिपत्तिनिरासार्थमाह—

॥ अज्ञाननिवृत्तिर्हानोपादानोपेक्षाश्च फलम् ॥ १ ॥

द्विविधं हि फलं साक्षात्पारम्पर्येणेति। साक्षादज्ञाननिवृत्तिः पारम्पर्येण हानादिकमिति, प्रमेयनिश्चयोत्तरकालभावित्वात्तस्येति ॥ तद्द्विविधमपि फलं प्रमाणाद्भिन्नमेवेति यौगाः। अभिन्नमेवेति सौगताः। तन्मतद्वयनिरासेन स्वमतं व्यवस्थापयितुमाह—

॥ प्रमाणादभिन्नं भिन्नं च ॥ २ ॥

कथञ्चिदभेदसमर्थनार्थं हेतुमाह—

॥ यः प्रमिमीते स एव निवृत्ताज्ञानो जहात्या-
दत्त उपेक्षते चेति प्रतीतेः ॥ ३ ॥

अयमर्थः- यस्यैवात्मनः प्रमाणाकारेण परिणतिस्तस्यैव फलरूपतया परिणाम इत्येकप्रमात्रपेक्षया प्रमाणफलयोरभेदः। करणक्रियापरिणामभेदाद्भेद इत्यस्य सामर्थ्यसिद्धत्वान्नोक्तम् ॥

पारम्पर्येण साक्षाच्च फलं द्वेधाऽभिधायि यत्।

देवैर्भिन्नमभिन्नं च प्रमाणात्तदिहोदितम् ॥ १ ॥

इति परीक्षामुखलघुवृत्तौ फलसमुद्देशः पञ्चमः ॥ ५ ॥

---

अथेदानीमुक्तप्रमाणस्वरूपादिचतुष्टयाभासमाह—

॥ ततोऽन्यत्तदाभासमिति ॥ १ ॥

तत उक्तात् प्रमाणस्वरूपसंख्याविषयफलभेदादन्यद्विपरीतं तदाभासमिति ॥ तत्र क्रमप्राप्तं स्वरूपाभासं दर्शयति—

**अस्वसंविदितगृहीतार्थदर्शनसंशयादयः प्रमाणाभासाः ॥२॥**

अस्वसंविदितश्च गृहीतार्थश्च दर्शनश्च संशय आदिर्येषां ते संशयादयश्चेति सर्वेषां द्वंद्वः ॥ आदिशब्देन विपर्यानध्यवसाययोरपि ग्रहणम् ॥ तत्रास्वसंविदितं ज्ञानं ज्ञानान्तरप्रत्यक्षत्वादिति नैयायिकाः । तथाहि ज्ञानं स्वव्यतिरिक्तवेदनवेद्यं वेद्यत्वात् घटवदिति । तदसङ्गतम्— धर्मिज्ञानस्य ज्ञानान्तरवेद्यत्वे साध्यान्तःपातित्वेन धर्मित्वायोगात् ॥ स्वसंविदितत्वे तेनैव हेतोरनेकान्तात् ॥ महेश्वरज्ञानेन च व्यभिचाराद्व्याप्तिज्ञानेनाप्यनेकान्तादर्थप्रतिपत्त्ययोगाच्च ॥ नहि ज्ञापकमप्रत्यक्षं ज्ञाप्यं गमयति शब्दलिङ्गादीनामपि तथैव गमकत्वप्रसङ्गात् ॥ अनन्तरभाविज्ञानग्राह्यत्वे तस्याप्यगृहीतस्य पराज्ञापकत्वात्तदनन्तरं कल्पनीयम् । तत्रापि तदनन्तरमित्यनवस्था

॥ तस्मान्नायं पक्षः श्रेयान् ॥ एतेन करणज्ञानस्य परोक्षत्वेनास्वसंविदितत्वं ब्रुवन्नपि मीमांसकः प्रत्युक्तः । तस्यापि ततोऽर्थप्रत्यक्षत्वायोगात् ॥ अथ कर्मत्वेनाप्रतीयमानत्वादप्रत्यक्षत्वे तर्हि फलज्ञानस्याप्रत्यक्षता तत एव स्यात् ॥ अथ फलत्वेन प्रतिभासनं नो चेत् करणज्ञानस्यापि करणत्वेनावभासनात् प्रत्यक्षत्वमस्तु । तस्मादर्थप्रतिपत्त्यन्यथाऽनुपपत्तेः करणज्ञानकल्पनावदर्थप्रत्यक्षत्वान्यथाऽनुपपत्तेर्ज्ञानस्यापि प्रत्यक्षत्वमस्तु ॥ अथ करणस्य चक्षुरादेरप्रत्यक्षत्वेऽपि रूपप्राकट्याद्व्यभिचार इति चेन्न, भिन्न कर्तृककरणस्यैव तद्व्यभिचारात् ॥ अभिन्नकर्तृके करणे सति कर्तृप्रत्यक्षतायां तदभिन्नस्यापि करणस्य कथञ्चित्प्रत्यक्षत्वेनाप्रत्यक्षतैकान्तविरोधात्प्रकाशात्मनोऽप्रत्यक्षत्वे प्रदीपप्रत्यक्षत्वविरोधवदिति ॥ गृहीतग्राहिधारावाहिज्ञानं, गृहीतार्थं दर्शनं, सौगताभिमतं निर्विकल्पकं, तच्च स्वविषयानुपदर्शकत्वादप्रमाणं व्यवसायस्यैव तज्जनितस्य तदुपदर्शकत्वात् ॥ अथ व्यवसायस्य प्रत्यक्षाकारेणानुरक्तत्वात्ततः प्रत्यक्षस्यैव प्रामाण्यं व्यवसायस्तु गृहीतग्राहित्वादप्रमाणमिति तन्न सुभाषितं— दर्शनस्याविकल्पकस्यानुपलक्षणात्तत्सद्भावायोगात् सद्भावा वा नीलादाविव क्षणक्षयादावपि तदुपदर्शकत्वप्रसङ्गात् ॥ तत्र विपरीतसमारोपान्नेति चेत्तर्हि सिद्धं नीलादौ समारोपविधिग्रह—

णलक्षणो निश्चय इति तदात्मकमेव प्रमाणमितरत्तदाभासमिति ॥ संशयादयश्च प्रसिद्धा एव । तत्र संशय उभयकोटिसंस्पर्शी स्थाणुर्वा पुरुषो वेति परामर्शः ॥ विपर्ययः पुनरतस्मिँस्तदिति विकल्पः । विशेषानवधारणमध्यवसायः ॥ कथमेषामस्वसंविदितादीनां तदाभासतेत्यत्राह—

॥ स्वविषयोपदर्शकत्वाभावात् ॥ ३ ॥

गतार्थमेतत् । अत्र दृष्टान्तं यथाक्रममाह—

॥ पुरुषान्तरपूर्वार्थगच्छत्तृणस्पर्शस्थाणुपुरुषादिज्ञानवत् ॥४॥

पुरुषान्तरं च पूर्वार्थश्च गच्छत्तृणस्पर्शश्च स्थाणुपुरुषादिश्च तेषां ज्ञानं तद्वत् ॥ अपरं च सन्निकर्षवादिनं प्रति दृष्टान्तमाह—

॥ चक्षूरसयोर्द्रव्ये सँयुक्तसमवायवच्च ॥ ५ ॥

अयमर्थो यथा चक्षूरसयोः संयुक्तसमवायः सन्नपि न प्रमाणं तथा चक्षूरूपयोरपि । तस्मादयमपि प्रमाणाभास एवेति ॥ उपलक्षणमेतत् अतिव्याप्तिकथनमव्याप्तिश्च । सन्निकर्षप्रत्यक्षवादिनां चक्षुषि सन्निकर्षस्याभावात् ॥ अथ चक्षुः प्राप्तार्थपरिच्छेदकं व्यवहितार्थाप्रकाशकत्वात् प्रदीपवदिति तत्सिद्धिरिति मतं तदपि न साधीयः । काचाभ्रपटलादिव्यवहितार्थानामपि चक्षुषा प्रतिभासनाद्धेतोरसिद्धेः । शाखाचन्द्रमसोरेककालदर्शनानुपपत्तिप्रसक्तेश्च ॥

न च तत्र क्रमेऽपि यौगपद्याभिमान इति वक्तव्यम् । कालव्यवधानानुपलब्धेः ॥ किञ्च क्रमप्रतिपत्तिः प्राप्तिनिश्चये सति भवति । न च क्रमप्राप्तौ प्रमाणान्तरमस्ति । तैजसत्वमस्तीति चेन्न तस्यासिद्धेः ॥ अथ चक्षुस्तैजसं रूपादीनां मध्ये रूपस्यैव प्रकाशकत्वात् प्रदीपवदिति । तदप्यपर्यालोचिताभिधानं मण्यञ्जनादेः पार्थिवत्वेऽपि रूपप्रकाशकत्वदर्शनात् ॥ पृथिव्यादिरूपप्रकाशकत्वे पृथिव्याद्यारब्धत्वप्रसङ्गाच्च । तस्मात्सन्निकर्षस्याव्यापकत्वान्न प्रमाणत्वं करणज्ञानेन व्यवधानाच्चेति ॥ प्रत्यक्षाभासमाह—

॥ अवैशद्ये प्रत्यक्षं तदाभासं बौद्धस्याकस्माद्धूमदर्शनाद्वह्निविज्ञानवदिति ॥ ६ ॥

परोक्षाभासमाह—

वैशद्येऽपि परोक्षं तदाभासं मीमांसकस्य करणज्ञानवत् ॥७॥

प्राक् प्रपञ्चितमेतत् । परोक्षभेदाभासमुपदर्शयन् प्रथमं क्रमप्राप्तं स्मरणाभासमाह—

अतस्मिंस्तदिति ज्ञानं स्मरणाभासं
जिनदत्ते स देवदत्तो यथेति ॥ ८ ॥

अतस्मिन्ननुभूत इत्यर्थः शेषं सुगमम् ॥ प्रत्यभिज्ञानाभासमाह—

॥ सदृशे तदेवेदं तस्मिन्नेव तेन सदृशं यमल-
कवदित्यादि प्रत्यभिज्ञानाभासम् ॥ ॥ ९ ॥

द्विविधं प्रत्यभिज्ञानाभासमुपदर्शितं, एकत्वनिबंधनं सादृश्यनिबं-धनं चेति ॥ तत्रैकत्त्वे सादृश्यावभासः सादृश्ये चैकात्वाभासस्त-दाभासमिति ॥ तर्काभासमाह—

॥ असम्बद्धे तज्ज्ञानं तर्काभासम् ॥ १० ॥

यावाँस्तत्पुत्रः स श्याम इति यथा । तज्ज्ञानमिति व्याप्तिलक्ष-णसम्बन्धज्ञानमित्यर्थः ॥ इदानीमनुमानाभासमाह—

॥ इदमनुमानाभासम् ॥

इदं वक्ष्यमाणमिति भावः ॥ तत्र तदवयवाभासोपदर्शनेन समु-दायरूपानुमानाभासमुपदर्शयितुकामः प्रथमावयवाभासमाह—

॥ तत्रानिष्टादिः पक्षाभासः ॥ १२ ॥

इष्टमबाधितमित्यादि तल्लक्षणमुक्तमिदानीं तद्विपरीतं तदाभा-समिति कथयति—

॥ अनिष्टो मीमांसकस्यानित्यः शब्दः ॥ ११ ॥

असिद्धाद्विपरीतं तदाभासमाह—

॥ सिद्धः श्रावणः शब्द इति ॥ १४ ॥

अबाधितमविपरीतं तदाभासमावेदयन् स च प्रत्यक्षादिबाधित

एवेति दर्शयन्नाह—

॥ बाधितः प्रत्यक्षानुमानागमलोकस्ववचनैः ॥ १५ ॥

एतेषां क्रमेणोदाहरणमाह—

॥ तत्र प्रत्यक्षबाधितो यथा अनुष्णोऽग्नि-
द्रव्यत्वाज्जलवत् ॥ १६ ॥

स्पर्शनप्रत्यक्षेण ह्युष्णस्पर्शात्मकोऽग्निरनुभूयते ॥ अनुमानबा-धितमाह—

॥ अपरिणामी शब्दः कृतकत्वात् घटवत् ॥ १७ ॥

अत्र पक्षोऽपरिणामी शब्दः कृतकत्वादित्यनेन बाध्यते ॥ आगमबाधितमाह—

॥ प्रेत्यासुखप्रदो धर्मः पुरुषाश्रितत्वादधर्मवत् ॥ १८ ॥

आगमे हि पुरुषाश्रितत्वाविशेषेऽपि परलोके धर्मस्य सुखहेतुत्व-मुक्तम् । लोकबाधितमाह—

॥ शुचि नरशिरःकपालं प्राण्यंगत्वाच्छंखशुक्तिवत् ॥ १९ ॥

लोके हि प्राण्यंगत्वेऽपि कस्यचिच्छुचित्वमशुचित्वं च । तत्र नरकपालादीनामशुचित्वमेवेति लोकबाधितत्वम् । स्ववचनबाधितमाह

॥ माता मे वन्ध्या पुरुषसंयोगेऽप्यगर्भत्वात्प्र-
सिद्धवन्ध्यावत् ॥ २० ॥

इदानीं हेत्वाभासान् क्रमापन्नानाह—

॥ हेत्वाभासा असिद्धविरुद्धानैकान्तिकाकिञ्चित्कराः ॥२१॥

एषां यथाक्रमं लक्षणं सोदाहरणमाह—

॥ असत्सत्तानिश्चयोऽसिद्धः ॥ २२ ॥

सत्ता च निश्चयश्च सत्तानिश्चयौ, असन्तौ सत्तानिश्चयौ यस्य स भवत्यसत्सत्तानिश्चयः। तत्र प्रथमभेदमाह—

॥ अविद्यमानसत्ताकः परिणामी शब्दश्चाक्षुषत्वात् ॥ २३ ॥

कथमस्यासिद्धत्वमित्याह—

॥ स्वरूपेणासत्त्वात् ॥ २४ ॥

द्वितीयासिद्धभेदमुपदर्शयति—

॥ अविद्यमाननिश्चयो मुग्धबुद्धिंप्रत्यग्निरत्र धूमादिति ॥२५॥

अस्याप्यसिद्धता कथमित्त्यारेकायामाह—

॥ तस्य वाष्पादिभावेन भूतसंघाते संदेहात् ॥ २६ ॥

तस्येति मुग्धबुद्धिप्रतीत्यर्थः। अपरमसिभेदमाह—

॥ सांख्यम्प्रति परिणामी शब्दः कृतकत्वादिति ॥ २७ ॥

अस्यासिद्धतायां कारणमाह—

॥ तेनाज्ञातत्वादिति ॥ २८ ॥

तेन सांख्येनाज्ञातत्वात्तन्मते ह्याविर्भावतिरोभावावेव प्रसिद्धौ,

नोत्पत्त्यादिरिति ॥ आस्याप्यनिश्चयादसिद्धत्वमित्यर्थः ॥ विरुद्धं हेत्वाभासमुपदर्शयन्नाह—

॥ विपरीतनिश्चिताविनाभावो विरुद्धोऽपरिणामी शब्दः कृतकत्वात् ॥ २९ ॥

कृतकत्वं ह्यपरिणामविरोधिना परिणामेन व्याप्तमिति ॥ अनैकान्तिकं हेत्वाभासमाह—

॥ विपक्षेऽप्यविरुद्धवृत्तिरनैकान्तिकः ॥ ३० ॥

अपिशब्दान्न केवलं पक्षसपक्षयोरिति द्रष्टव्यम् । स च द्विविधो विपक्षे निश्चितवृत्तिः शङ्कितवृत्तिश्चेति ॥ तत्राद्यं दर्शयन्नाह—

॥ निश्चितवृत्तिरनित्यः शब्दः प्रमेयत्वात् घटवादिति ॥ ३१ ॥

कथमस्य विपक्षे निश्चिता वृत्तिरित्याशङ्क्याह —

॥ आकाशे नित्येऽप्यस्य निश्चयात् ॥ ३२ ॥

शङ्कितवृत्तिमुदाहरति—

॥ शङ्कितवृत्तिस्तु नास्ति सर्वज्ञो वक्तृत्वादिति ॥ ३३ ॥

अस्यापि कथं विपक्षे वृत्तिराशंक्यत इत्यत्राह—

॥ सर्वज्ञत्वेन वक्तृत्वाविरोधादिति ॥ ३४ ॥

अविरोधश्च ज्ञानोत्कर्षे वचनानामपकर्षादर्शनादिति निरूपितप्रायम् ॥ अकिञ्चित्करस्वरूपं निरूपयति—

॥ सिद्धे प्रत्यक्षादिबाधिते च साध्ये हेतुरकिञ्चित्करः ३५

तत्र सिद्धे साध्ये हेतुरकिञ्चित्कर इत्युदाहरति—

॥ सिद्धः श्रावणः शब्दः शब्दत्वात् ॥ ३६ ॥

कथमस्याकिञ्चित्करत्वमित्याह—

॥ किञ्चिदकरणात् ॥ ३७ ॥

अपरं च भेदं प्रथमस्य दृष्टान्तीकरणद्वारेणोदाहरति—

॥ यथाऽनुष्णोऽग्निर्द्रव्यत्वादित्यादौ किञ्चित्कर्तुमशक्यत्वात् ॥ ३८ ॥

अकिञ्चित्करत्वमिति शेषः ॥ अयं च दोषो हेतुलक्षणविचारावसर एव, न वादकाल इति व्यक्तीकुर्वन्नाह—

॥ लक्षण एवासौ दोषो व्युत्पन्नप्रयोगस्य पक्षदोषेणैव दुष्टत्वात् ॥ ३९ ॥

दृष्टान्तोऽन्वयव्यतिरेकभेदाद्द्विविध इत्युक्तं तत्रान्वयदृष्टान्ताभासमाह—

॥ दृष्टान्ताभासा अन्वयेऽसिद्धसाध्यसाधनोभयाः ॥ ४० ॥

साध्यं च साधनं च उभयं च साध्यसाधनोभयानि असिद्धानि यानि येष्विति विग्रहः ॥ एतानेकत्रैवानुमाने दर्शयति—

॥ अपौरुषेयः शब्दोऽमूर्तत्वादिन्द्रियसुखपरमाणुघटवत् ४१

इन्द्रियसुखमसिद्धसाध्यं तस्य पौरुषेयत्त्वात् । परमाणुरसिद्धसाधनं तस्य मूर्तत्त्वात् । घटश्चासिद्धोभयः पौरुषेयत्त्वान्मूर्तत्त्वाच ॥ साध्यव्याप्तं साधन दर्शनीयमिति दृष्टान्तावसरे प्रतिपादितं तद्विपरीतदर्शनमपि तदाभासमित्याह----

॥ विपरीतान्वयश्च यदपौरुषेयं तदमूर्तम् ॥ ४२ ॥

कुतोऽस्य तदाभासतेत्याह---

॥ विद्युदादिनाऽतिप्रसङ्गात् ॥ ४३ ॥

तस्याप्यमूर्तताप्राप्तेरित्यर्थः । व्यतिरेकोदाहरणाभासमाह---

व्यतिरेके सिद्धतव्यतिरेकाः परमाण्विन्द्रियसुखाकाशवत् ४४

अपौरुषेयः शब्दोऽमूर्तत्वादित्यत्रैवासिद्धाः साध्यसाधनोभयव्यतिरेका यत्रेति विग्रहः । तत्रासिद्धसाध्यव्यतिरेकः परमाणुस्तस्यापौरुषेयत्वात् इन्द्रियसुखमसिद्धसाधनव्यतिरेकम् ॥ आकाशं त्वसिद्धोभयव्यतिरेकमिति । साध्याभावे साधनव्यावृत्तिरिति व्यतिरेकोदाहरणप्रघट्टके ख्यापितं तत्र तद्विपरीतमपि तदाभासमित्युपदर्शयति

॥ विपरीतव्यतिरेकश्च यन्नामूर्तं तन्नापौरुषेयम् ॥ ४५ ॥

बालव्युत्पत्त्यर्थं तत्त्रयोपगम इत्युक्तमिदानीं तान्प्रत्येव कियद्धीनतायां प्रयोगाभासमाह—

॥ बालप्रयोगाभासः पञ्चावयवेषु कियद्धीनता ॥ ४६ ॥

तदेवोदाहरति—

॥ अग्निमानयं देशो धूमवत्वात् यदित्थं तदि-
ऽत्थं यथा महानस इति ॥ ४७ ॥

इत्यवयवत्रयप्रयोगे सतीत्यर्थः । चतुरवयवप्रयोगे तदाभासत्वमाह—

॥ धूमवांश्चायमिति वा ॥ ४८ ॥

अवयवविपर्ययेऽपि तत्त्वमाह--

॥ तस्मादग्निमान् धूमवांश्चायमिति ॥ ४९ ॥

कथमवयवविपर्यये प्रयोगाभास इत्यारेकायामाह—

॥ स्पष्टतया प्रकृतप्रतिपत्तेरयोगात् ॥ ५० ॥

इदानीमागमाभासमाह—

॥ रागद्वेषमोहाक्रान्तपुरुषवचनाज्जातमागमाभासम् ॥ ५१ ॥

उदाहरणमाह--

॥ यथा नद्यास्तीरे मोदकराशयः सन्ति, धावध्वं माणवकाः

कश्चिन्माणवकैराकुलीकृतचेतास्तत्सङ्गपरिजिहीर्षया प्रतारणवाक्येन नद्या देशं तान् प्रस्थापयतीत्याप्तोक्तेरन्यत्वादागमाभासत्वम् । प्रथमोदाहरणमात्रेणातुष्यन्नुदाहरणान्तरमाह—

अंगुल्यग्रे हस्तियूथशतमास्त इति च ॥ ५३ ॥

अत्रापि सांख्यपशुः स्वदुरागमजनितवासनाहितचेता दृष्टेष्ट-

विरुद्धं सर्वं सर्वत्र विद्यत इति मन्यमानस्तथोपदिशतीत्यनाप्तवचनत्वादिदमपि तथेत्यर्थः ॥ कथमनन्तरयोर्वाक्ययोस्तदाभासत्वमित्याशंकायामाह---

॥ विसँवादात् ॥ ५४ ॥

अविसँवादरूपप्रमाणलक्षणाभावान्न तद्विशेषरूपमपीत्यर्थः ॥ इदानीं संख्याभासमाह---

॥ प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्याभासम् ॥ ५५ ॥

प्रत्यक्षपरोक्षभेदात् द्वैविध्यमुक्तं तद्वैपरीत्येन प्रत्यक्षमेव प्रत्यक्षानुमाने, एवेत्याद्यवधारणं संख्याभासम् ॥ प्रत्यक्षमेवैकमिति कथं संख्याभासमित्याह—

॥ लौकायतिकस्य प्रत्यक्षतः परलोकादिनिषेधस्य परबुद्ध्यादेश्चासिध्देरतद्विषयत्वात् ॥ ५६ ॥

अतद्विषयत्वात् अप्रत्यक्षविषयत्वादित्यर्थः । शेषं सुगमम् ॥ प्रपञ्चितमेवैतत्संख्याविप्रतिपत्तिनिराकरण इति नेह पुनरुच्यते ॥ इतरवादिप्रमाणेयत्तावधारणमपि विघटत इति लौकायतिकदृष्टान्तद्वारेण तन्मतेऽपि संख्याभासमिति दर्शयति—

॥ सौगतसांख्ययौगप्राभाकरजैमिनीयानां प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावैरेकैकाधिकैर्व्याप्तिवत् ॥ ५७ ॥

यथा प्रत्यक्षादिभिरेकैकाधिकैर्व्याप्तिः प्रतिपत्तुं न शक्यते सौगतादिभिस्तथा प्रत्यक्षेण लौकायतिकैः परबुध्द्यादिरपीत्यर्थः ॥ अथ परबुध्द्यादिप्रतिपत्तिः प्रत्यक्षेण माभूदन्यस्माद्भविष्यतीत्याशङ्कयाह—

॥ अनुमानादेस्तद्विषयत्वे प्रमाणान्तरत्वम् ॥ ५८ ॥

तच्छब्देन परबुध्द्यादिरभिधीयते । अनुमानादेः परबुध्द्यादिविषयत्वे प्रत्यक्षैकप्रमाणवादो हीयत इत्यर्थः ॥ अत्रोदाहरणमाह—

॥ तर्कस्येव व्याप्तिगोचरत्वे प्रमाणान्तरत्वम् ।
अप्रमाणस्याव्यवस्थापकत्त्वात् ॥ ५९ ॥

सौगतादीनामिति शेषः ॥ किञ्च प्रत्यक्षैकप्रमाणवादिना प्रत्यक्षाद्येकैकाधिकप्रमाणवादिभिश्च स्वसंवेदनेन्द्रियप्रत्यक्षभेदोऽनुमानादिभेदश्च प्रतिभासभेदेनेव वक्तव्यो गत्यन्तराभावात् । स च तद्भेदो लौकायतिकंप्रति प्रत्यक्षानुमानयोरितरेषां व्याप्तिज्ञानप्रत्यक्षादिप्रमाणेष्विति सर्वेषां प्रमाणसंख्या विघटते ॥ तदेव दर्शयति—

॥ प्रतिभासभेदस्य च भेदकत्वात् ॥ ६० ॥

इदानीं विषयाभासमुपदर्शयितुमाह —

॥ विषयाभासः सामान्यं विशेषो द्वयं वा स्वतंत्रम् ॥ ६१ ॥

कथमेषां तदाभासतेत्याह—

**॥ तथाप्रतिभासनात्कार्याकरणाच्च ॥ ६२ ॥**

किञ्च तदेकान्तात्मकं तत्त्वं स्वयं समर्थमसमर्थं वा कार्याकारि स्यात्? प्रथमपक्षे दूषणमाह—

**॥ समर्थस्य करणे सर्वदोत्पत्तिरनपेक्षत्वात् ॥ ६३ ॥**

सहकारिसान्निध्यात् तत्करणान्नेति चेदत्राह—

**॥ परापेक्षणे परिणामित्वमन्यथा तदभावात् ॥ ६४ ॥**

वियुक्तावस्थायामकुर्वतः सहकारिसमवधानवेलायां कार्यकारिणः पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामोपपत्तेरित्यर्थः। अन्यथाकार्यकारणाभावात्। प्रागभावावस्थायामेवेत्यर्थः। अथ द्वितीयपक्षदोषमाह—

**॥ स्वयमसमर्थस्य अकारकत्वात्पूर्ववत् ॥ ६५ ॥**

अथ फलाभासं प्रकाशयन्नाह—

**॥ फलाभासं प्रमाणादभिन्नं भिन्नमेव वा ॥ ६६ ॥**

कुतः पक्षद्वयेऽपि तदाभासतेत्याशङ्कायामाद्यपक्षे तदाभासत्वे हेतुमाह—

**॥ अभेदे तद्व्यवहारानुपपत्तेः ॥ ६७ ॥**

फलमेव प्रमाणमेव वा भवेदिति भावः। व्यावृत्त्या संवृत्यपरनामधेयया तत्कल्पनाऽस्त्वित्याह—

॥ व्यावृत्त्याऽपि न तत्कल्पना फलान्तराद्व्या-
वृत्त्याऽफलत्वप्रसङ्गात् ॥ ६८ ॥

अयमर्थः— यथा फलाद्विजातीयात् फलस्य व्यावृत्त्या फलव्यवहारस्तथा फलान्तरादपि सजातीयाद्व्यावृत्तिरप्यस्तीत्यफलत्वम् । अत्रैवाभेदपक्षे दृष्टान्तमाह—

॥ प्रमाणाद्व्यावृत्त्येवाप्रमाणत्वस्येति ॥ ६९ ॥

अत्रापि प्राक्तन्येव प्रक्रिया योजनीया ॥ अभेदपक्षं निराकृत्य आचार्य उपसंहरति—

॥ तस्माद्वास्तवोऽभेद इति ॥ ७० ॥

भेदपक्षं दूषयन्नाह—

॥ भेदे त्वात्मान्तरवत्तदनुपपत्तेः ॥ ७० ॥

अथ यत्रैवात्मनि प्रमाणं समवेतं फलमपि तत्रैव समवेतमिति समवायलक्षणप्रत्यासत्त्या प्रमाणफलव्यवस्थितिरिति ॥ नात्मान्तरे तत्प्रसङ्ग इति चेत्तदपि न सूक्तमित्याह—

॥ समवायेऽतिप्रसङ्ग इति ॥ ७२ ॥

समवायस्य नित्यत्वाद्व्यापकत्वाच्च सर्वात्मनामपि समवायसमानधर्मिकत्वान्न ततः प्रतिनियम इत्यर्थः ॥ इदानीं स्वपरपक्षसाधनदूषणव्यवस्थामुपदर्शयति—

